

Satchidanand Shivabhinav Narsinha Bharati.

साच्चिदानंद शिवाभिनव नरसिंह भारती, पीठ शृंगेरी.

चि. शा. पुणें.



सदाशिव ब्रम्ह.

चित्रशाळा पुणें.

ॐ तत्सद्ब्रह्मणे नमः ।

सदाशिवयोगीश्वरविरचिता

# शिवयोगदीपिका ।

श्रीनृसिंहभारतीस्वामिविरचितं

श्रीसदाशिवब्रह्मेन्द्रपञ्चरत्नम् ।

श्रीसदाशिवेन्द्रविरचित

आत्मविद्याविलासः ।

ध्यानाद्यर्थप्रतिपादकोपनिषदादिवाक्यानां समुच्चयश्च ।

एतत्पुस्तकम्

आनन्दाश्रमस्थपण्डितैः संशोधितम् ।

तच्च

हरि नारायण आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८२९

खिस्ताब्दाः १९०७



मूल्यमाणकाष्टकम् ( ८ )

# शिवयोगदीपिकाप्रस्तावना ।

सन १९८४ मितसंवत्सरारम्भे शिवयोगदीपिकाख्यो ग्रन्थः 'पुड्डुकोटा' संस्थाने प्राप्तः । मद्रासइलाखान्तर्गतदक्षिणभागे द्राविडदेशे बहुस्थलेषु एतद्ग्रन्थस्य पुस्तकानि वर्तन्ते । अस्मिन्ग्रन्थे संक्षेपेण मन्त्रलयहठराजाख्यचतुर्विधयोगानां सौलभ्येन स्पष्टतया च वर्णनं कृत्वा व्यवस्थानिर्णयोऽस्ति ।

उपरिनिर्दिष्टग्रन्थस्य कर्ता क इत्यस्मिन्विषये प्रमाणतयैतद्ग्रन्थं विनाऽन्यत्साधनं नास्ति । ग्रन्थस्य नाम्ना सदाशिवयोगीश्वरः कर्तेति अनुमीयते । 'पुड्डुकोटा' संस्थाने ये सदाशिवब्रह्मनाम्ना प्रसिद्धाअवधूतयोगीश्वरा अभवंस्त एवैत इति प्रतिभाति । किं च साग्रग्रन्थनिरीक्षणेनापि एतादृशमहात्मानं योगीश्वरं विनाऽन्यः कोऽपि एतादृगनुभवप्रतिपादकग्रन्थलेखको भवेदित्यनुमातुं न शक्यते । यतोऽस्मिन्ग्रन्थे सर्वयोगभूमिकानां सूक्ष्माङ्गप्रत्यङ्गविभागेन यथा विवेचनं कृतं दृश्यते तथा सुलभतया संक्षिप्ततया च वर्णनं कर्तुं सदाशिवब्रह्मयोगीश्वरानवधूतान्विना कोऽपि अनुभवसिद्धस्तद्देशे भूतपूर्व इति न श्रुतम् । किं च ग्रन्थमहत्त्वेनैतद्ग्रन्थोपयुक्तता त्वत्यन्तं विद्यते

ग्रन्थप्रतिपाद्यविषयविज्ञापनात्प्रागियद्वाचकेभ्योऽवश्यं निवेदनीयं यथा ब्रह्मसूत्राणि दशोपनिषत्प्रतिपाद्यसर्वविषयाणां व्यवस्थापकत्वेन निर्णायकानि, तथा पातञ्जलसूत्राण्यपि योगप्रतिपादकबहूपनिषत्प्रतिपाद्यबहुविधयोगस्य साकल्येन व्यवस्थापकत्वान्निर्णायकानीत्यत्र न संदेहः। योगप्रतिपादकोपनिषदां विद्यारण्यगुरुश्रीशंकरानन्दविरचिता दीपिका अपि आनन्दाश्रमे मुद्रिता वर्तन्ते ।

इदानीं प्रकाश्यमानग्रन्थेऽष्टशतोपनिषन्मध्ये यासु योगः प्रतिपाद्यस्ता योगोपनिषदस्तत्प्रतिपाद्यविषयसंग्रहः कृतोऽस्ति । यासामुपनिषदामेतद्दीपिकायां समावेशस्तदुपनिषन्नामनिर्देशोऽग्र उचितस्थले करिष्यते ।

अन्यदेकं महद्वर्तते तच्च केचन वाचका इतिहासदृष्ट्या योगोपनिषत्कालनिर्णयवत्प्रामाण्य आक्षिपेयुस्तेभ्य इदमवश्यं निवेद्यते—तात्त्विकदृष्ट्या योगोपनिषत्प्रतिपादितविषयजातज्ञानमभ्यासिनां जिज्ञासूनां चात्यन्तोपयोगि, अतस्तासां तज्ज्ञान्प्रति अत्यन्तोपयुक्तता विद्यते ।

शिवयोगदीपिकायाः पञ्च भागा विद्यन्ते । तत्र प्रथमे विषयोपक्रमः । द्वितीयतृतीययोर्हठयोगविवेचनम् । चतुर्थपञ्चमयोरष्टोत्तरशतोपनिषन्मध्यस्थमण्डलब्राह्मणोपनिषदि राजयोगाख्यतद्भाष्ये च ये विषयास्तेषां प्रतिपादनम् । राजयोगभाष्यसहिता मण्डलब्राह्मणोपनिषत्पुस्तकरूपेण 'महाराजराजश्री ए० महादेवशास्त्री बी० ए० क्युरेटर गह्वरमेन्ट ओरिएन्टललायब्ररी मैसूर' इत्येतैः संशोध्य मुद्रापिता । एतद्वेदान्तविषयेऽपि 'सर० के० शेषाद्रिआयर' एतेषां बुद्धिमत्ताया यावती प्रशंसा क्रियेत तावती स्वल्पा । अत्रैतावत्कथनमवश्यं मण्डलब्राह्मणोपनिषद्येव राजयोगस्य सांख्यतारकामनस्करूपत्रैविध्येन स्पष्टतया वर्णनं वर्तते ।

योगतत्त्वोपनिषदि योगशिखोपनिषदि वराहोपनिषदि च चतुर्विधयोगानां ये चतुर्विधा अधिकारिणस्तेषां वर्णनं दृश्यते ।

यासूपनिषत्सु केवलं योगस्यैव विवेचनं ता उपनिषदोऽत्र प्रदर्श्यन्ते—

१ मन्त्रयोगस्य विवरणं बहूपनिषत्सु विद्यते तथाऽपि विशेषतो योगतत्त्वोपनिषदि योगशिखोपनिषदि च वर्तते ।

२ लययोगस्य सविस्तरं वर्णनं हंसोपनिषदि, सौभाग्यलक्ष्म्युपनिषद्, योगचूडामण्युपनिषद्, वराहोपनिषद्, मण्डलब्राह्मणोपनिषद्, इत्यादिषु प्रसङ्गतो वर्णनम् ।

३ हठयोगस्य वर्णनमधोनिर्दिष्टोपनिषत्सु दृश्यते—

१ योगतत्त्वोपनिषद्. २ योगचूडामण्यु० ३ योगशिखो० ४ योगकुण्डलि० ५ अमृतनादो० ६ नादबिन्दू. ७ ध्यानबिन्दू० ८ ब्रह्मविद्योपनिषद् ९ वराहो० । शाण्डिल्योपनिषदि तु सविस्तरं हठयोगस्यवर्णनम् ।

४ राजयोगप्रतिपादिका उपनिषदः—

१ मण्डलब्राह्मणो० २अद्वयतारको० ३तेजोबिन्दू०( श्रीमदाचार्यविरचितापरोक्षानुभूतिग्रन्थे विषया अत्रत्या एव स्युः । ) ४ त्रिशिखि० ५ दर्शनोपनिषद् ( एतद्विषयाः सूतसंहिताज्ञानवैभवखण्ड आयाताः । श्रीमज्जगद्गुरु—श्रीशंकराचार्यशृङ्गेरीपीठश्रीमद्विद्यारण्यस्वामिनां सूतसंहिताव्याख्यानं वर्तते ) ६ अमृतबिन्दू० ( ३ हठयोगवर्णने निर्दिष्टासूपनिषत्सु प्रसङ्गतो वर्णनम् । )

एतदन्यासु बहुषूपनिषत्सु वेदान्तप्रतिपाद्यज्ञानयोगापरपर्यायराजयोगस्य वर्णनमस्ति । ताश्चोपनिषदः—

१ ब्रह्मोपनिषद्. २ कैवल्यो० ३ श्वेताश्वतरो०४मैत्रेय्यु० ५स्कन्दोपनिषद् ६ निरालम्बोपनिषद्. ७ निर्वाणो० तथा संन्यासविधायकोपनिषदो नव—१नारदपरिव्राजको०२ संन्यासो० ३ परमहंसपरिव्राजको०४भिक्षुको० ५तुरीयातीतो० ६अवधूतो० ७याज्ञवल्क्यो० ८ जाबालो० ९ परमहंसो० ।

यद्यप्यस्माभिर्योगोपनिषदां स्थूलो विभागो हठराजरूपद्वैविध्येन कृतस्तथाऽप्येतादृशविभागकरणं वस्तुतः समीचीनं न। यतः सर्वास्वप्युपनिषत्सु हठराजयोगयोरभ्यासक्रमः कथितोऽस्ति । तस्मादयं विभागो गौण इति ज्ञेयम् । सप्राणायामध्यानं हठयोगः । केवलध्यानं राजयोग इति सर्वसंमतं सर्वश्रुतं च । अष्टस्वङ्गेषु यमनियमासनप्राणायामाख्यानि चत्वारि अङ्गानि बहिरङ्गाणि । तेषां विनियोगो हठेऽस्ति । प्रत्याहारो धारणा चान्तरङ्गे राजयोगस्येति योगिनो मन्यन्ते । राजयोगस्य श्रेष्ठान्तरङ्गध्यानजातः समाधिः फलम् । हठयोगे प्राणायामसाहाय्येन समाधिः साध्यः । एवं सर्वा अप्युपनिषदो लक्ष्यरूपेण समाधिस्थितेः प्रशंसां कुर्वन्ति । तथा च समाधिस्थितिः संपादनीयेत्यत्र न संशयः । एतद्विषये कस्यापि विवादो नास्ति । अतः प्रसङ्गतोऽष्टाङ्गनिरूपणं सर्वत्र न्यूनाधिकप्रमाणेन दृश्यते । तस्मात्सर्वासूपनिषत्सु हठराजयोगयोर्वर्णनस्य सत्त्वादविभागेनैव सर्वोपनिषत्सु हठराजयोगयोर्निरूपणमित्यपि वक्तुं प्रशस्तम् । योगतत्त्वयोगशिखोपनिषद्रीत्या हठयोगो राजयोगस्य पूर्वभूमिकेति वक्तुं युक्तम् । प्रख्यातहठप्रदीपिकायामपीत्थमुक्तम् । हठयोगप्रदीपिकाग्रन्थे हठयोगस्याङ्गानां निरूपणं स्पष्टतया विद्यते ।

### योगतत्त्वोपनिषद् ।

योगो हि बहुधा ब्रह्मन्भिद्यते व्यवहारतः ।
मन्त्रयोगो लयश्चैव हठोऽसौ राजयोगकः ॥ १९ ॥
आरम्भश्च घटश्चैव तथा परिचयः स्मृतः ।
निष्पत्तिश्चेत्यवस्था च सर्वत्र परिकीर्तिता ॥ २० ॥

### योगशिखा ।

कथितं तु तव प्रीत्या ह्येतदभ्यासलक्षणम् ।
मन्त्रो लयो हठो राजयोगोऽन्तर्भूमिकाः क्रमात् ॥१३० ॥
एक एव चतुर्धाऽयं महायोगोऽभिधीयते ।

हठयोगप्रदीपिका।

श्रीआदिनाथाय नमोऽस्तु तस्मै येनोपदिष्टा हठयोगविद्या।
विभ्राजते प्रोन्नतराजयोगमारोढुमिच्छोरधिरोहणीव ॥
प्रणम्य श्रीगुरुं नाथं स्वात्मारामेण योगिना।
केवलं राजयोगाय हठविद्योपदिश्यते ॥ २ ॥ १ उपदेशः
राजयोगमजानन्तः केवलं हठकर्मिणः।
एतानभ्यासिनो मन्ये प्रयासफलवर्जितान् ॥ ७९ ॥ ४ उ०
सर्वे हठलयोपाया राजयोगस्य सिद्धये।
राजयोगसमारूढः पुरुषः कालवञ्चकः ॥ १०३ ॥ ४ उ०
राजयोगं विना पृथ्वी राजयोगं विना निशा ॥ ३ उपदेशः
राजयोगं विना मुद्रा विचित्राऽपि न शोभते ॥ १२६ ॥

राजयोगाभ्यासकर्तृभ्यः सूचना—केषांचिद्वेदान्तपण्डितानां मतं कानिचिदक्षराणि वाक्यानि च संज्ञाभूतानि। यथा, ॐ प्रणवः, वेदान्तमहावाक्यानि तत्त्वमस्यादीनि। एतेषामर्थचिन्तनमेव ध्यानपदवाच्यं राजयोगाभ्यास इति। इदं न यथार्थम्। राजयोगाभ्यासेच्छुभ्य इयत्सविनयं विज्ञाप्यते—निर्गुणब्रह्मस्थितिसिध्यर्थं नानाविधानि श्रुतिवाक्यानि बहुविधसरण्या क्वचित्संक्षिप्ततया क्वचिद्विस्तृततया च साधनादिप्रतिपादनं कुर्वन्ति। सर्ववाक्याणामन्तिमो हेतुस्तु अधिकारिमात्रस्य प्रणवध्यानपूर्वकनिर्विकल्पसमाधिद्वारा ब्रह्मप्राप्तिः। अन्यथा नानार्थशब्दजालचिन्तनेनाभ्यासे विघ्नसंभवः।

प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते।
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥

मुण्डकस्य द्वितीयः खण्डः।

धारणाख्याङ्गसाहचर्यं विना ध्यानस्थितिसिद्धिरशक्या। इदमत्र तात्पर्यं ध्यानस्यैव निदिध्यासनमित्यपरपर्यायः। ध्यान एव च धारणाया अन्तर्भावो भवतीति।

योगचूडामण्युपनिषद्यपि एतत्सिद्धान्तप्रतिपादनं वर्तते—

प्राणायामद्विषट्केन प्रत्याहारः प्रकीर्तितः।
प्रत्याहारद्विषट्केन जायते धारणा शुभा ॥ १११ ॥
धारणा द्वादश प्रोक्तं ध्यानं योगविशारदैः।
ध्यानद्वादशकेनैव समाधिरभिधीयते ॥ ११२ ॥

यत्समाधौ परं ज्योतिरनन्तं विश्वतोमुखम् ।
तस्मिन्दृष्टे क्रिया कर्मयातायातो न विद्यते ॥ ११३ ॥

मण्डलब्राह्मणोपनिषद्यपि–ध्यानविस्मृतिः समाधिरिति । एतद्व्याख्यानमपि चित्ते स्थापयितुमर्हम् । तच्च–विषयव्यावर्तनपूर्वकं चैतन्ये चेतःस्थापनं धारणा भवति । सर्वशरीरेषु चैतन्यैकतानता ध्यानम् । ध्यानविस्मृतिः समाधिरिति । उपरिनिर्दिष्टधारणाध्यानसमाधिलक्षणावलोकनेनैतज्ज्ञायेत राजयोगस्येतिकर्तव्यतायाः सीमा समाधिः । स च ध्यानं विना साध्यो न । ध्यानसिद्धिस्तु धारणाबलमवलम्ब्य । इदं शास्त्रसंमतमनुभवसिद्धं च । अतो राजयोगाभ्यासिनामेतदन्तरङ्गसाधनाभ्यासोऽत्यन्तमावश्यक इतिकथनस्याप्यपेक्षा नैव विद्यते । राजयोगः, सांख्ययोगः, ज्ञानयोगः, वेदान्तविचारः, एते सर्वे शब्दा एकार्थवाचका इतिज्ञापनस्याऽऽवश्यकता दृश्यते ।

हठयोगप्रदीपिका ४ उपदेशः ।

राजयोगः समाधिश्च उन्मनी च मनोन्मनी ।
अमरत्वं लयस्तत्त्वं शून्याशून्यं परं पदम् ॥ ३ ॥
अमनस्कं तथाऽद्वैतं निरालम्बं निरञ्जनम् ।
जीवन्मुक्तिश्च सहजा तुर्या चेत्येकवाचकाः ॥ ४ ॥

एतद्विषये सुज्ञान्प्रार्थये तैर्वराहोपनिषदश्चतुर्थोऽध्यायो वाच्यः । तत्रैको मनोरञ्जक इतिहासो वर्णितोऽस्ति । शुकयोगीश्वराः सांख्ययोगिन आसन् । तेषां मार्गस्य विहंगममार्ग इति संज्ञा । वामदेवास्तु हठयोगाभ्यासित्वात्पिपीलिकामार्गावलम्बिनः । पिपीलिकामार्गाख्यहठयोगावलम्बनेन वामदेवानामष्टसिद्धिरूपान्तरायात्तस्मिन्नेव जन्मनि जीवन्मुक्तिसुखप्राप्त्यभावः । किंच विदेहकैवल्ये मुक्तिप्राप्तौ वाऽन्तरायप्राप्त्या पुनर्जन्मस्वीकार एवाऽऽवश्यकोऽभवत् । एवंरीत्या हठयोगे सिद्धयः पुनर्जन्म च विघ्ना वर्तन्ते । एवं हठराजयोगयोर्महदन्तरमित्येतस्यार्थस्य प्रकटीकरणे पूर्वोक्तेतिहासस्य तात्पर्यं विद्यते ।

एतद्दीपिकायां ध्यानं धारणेति क्रमो वर्तते परं तु पाठक्रमादर्थक्रमो बलीयानिति न्यायेनोपनिषदादिप्रामाण्येन च धारणा ध्यानमिति क्रमो ज्ञेयः ।

कै० सर मुतुस्वामी आयर इत्येतैर्बहुभ्यो वत्सरेभ्यः पूर्वं नाम सन १८९४ मितवत्सरे मह्यं योगमार्गप्रकाशमेच्छा प्रदर्शिता । तथा योगा-

भ्यासकरण इदानींतनमत्प्रकृतप्रयत्नेनाल्पमपि साहाय्यं स्याच्चेत्तर्हि मच्छ्रमस्य पूर्णं सार्थक्यं जातमिति मंस्ये । एतद्ग्रन्थशोधनादौ पुण्यनगरस्थैर्बहुमान्यैः ' डाक्टर गणेश कृष्ण गर्दे एल एम् अँड एस ' इत्येतैर्बहूपकृतं तथाऽऽनन्दाश्रमव्यवस्थापकैः ' रा. रा. हरि नारायण आपटे ' इत्येतैर्मदिच्छामुररीकृत्यैतद्ग्रन्थमुद्रापणादिना बहूपकृतम् ।

' काशीनाथशास्त्री आगाशे ' इत्येतैरियं प्रस्तावनाऽऽर्ययोगीश्वरकृष्णस्वामिप्रार्थनया संस्कृतभाषया व्यलेखीति शम् ।

———

ॐ तत्सद्ब्रह्मणे नमः ।

श्रीदक्षिणामूर्तये नमः ।

सदाशिवयोगीश्वरविरचिता

# शिवयोगदीपिका ।

तत्र प्रथमः पटलः ।

परमयोगिमनोम्बुजषट्पदं त्रिविधकारणकारणमव्ययम् ।
सगुणनिर्गुणतत्त्वमनामयं गुरुसदाशिवलिङ्गमहं भजे ॥ १ ॥
श्रीमद्गुरुप्रसादेन योगं ज्ञात्वा शिवात्मकम् ।
वक्ष्यामि सुप्रबोधाय शिवयोगप्रदीपिकाम् ॥ २ ॥
शिवतत्त्वविदां श्रेष्ठ वक्ष्यामि शृणु तेऽधुना ।
शिवयोगं परं गुह्यमपि त्वद्भक्तिगौरवात् ॥ ३ ॥
*मन्त्रो लयो हठो राजा चेति योगाश्चतुर्विधाः ।
तानाहुः पूर्वमुनयः सिद्धाः शंभुप्रबोधितान् ॥ ४ ॥
एकाक्षरं द्व्यक्षरं वा षडक्षरमथापि वा ।
अष्टाक्षरं वा मोक्षाय मन्त्रयोगी सदा जपेत् ॥ ५ ॥
यस्य चित्तं निजं ध्यायेन्मनसा मरुता सह ।
लीनं भवति नादेन लययोगी स एव हि ॥ ६ ॥
भवेदष्टाङ्गमार्गेण मुद्राकरणबन्धनैः ।
तथा केवलकुम्भेन हठयोगी वशानिलः ॥ ७ ॥
त्रिषु लक्ष्येषु यो ब्रह्मसाक्षात्कारं गमिष्यति ।
ज्ञानोपायमनोवृत्तिरहितो राजयोगवित् ॥ ८ ॥
उत्तरोत्तरवैशिष्ट्याद्योगाश्चत्वार एव हि ।
तेष्वेक एव मुख्योऽसौ राजयोगोत्तमोत्तमः ॥ ९ ॥
सोऽपि त्रिधा भवेत्सांख्यस्तारकश्चामना इति ।
पञ्चविंशतितत्त्वानां ज्ञानं यत्सांख्यमुच्यते ॥ १० ॥
बहिर्मुद्रापरिज्ञानाद्योगस्तारक उच्यते ।
अन्तर्मुद्रापरिज्ञानादमनस्क इतीरितः ॥ ११ ॥

* एतद्योगचतुष्टयम् ।

श्लाघ्यः सांख्यात्तारकोऽयममनस्कोऽपि तारकात् ।
राजत्वात्सर्वयोगाणां राजयोग इति स्मृतः ॥ १२ ॥
नाभेदः शिवयोगस्य राजयोगस्य तत्त्वतः ।
शिवार्चिनां तथाऽप्येवमुक्तो बुद्धेः प्रवर्तते ॥ १३ ॥
प्रतिपाद्यस्तयोर्भेदस्तथा शिवरतात्मनाम् ।
तस्मान्मनीषिभिर्ग्राह्यः शिवयोगस्तु केवलः ॥ १४ ॥
ज्ञानं शिवमयं भक्तिः शैवं ज्ञानं शिवात्मकम् ।
शैवं व्रतं शिवार्चेति शिवयोगो हि पञ्चधा ॥ १५ ॥
शिवाचारविहीनो यः पशुरेव न संशयः ।
स तु संसारचक्रेऽस्मिन्नजस्रं परिवर्तते ॥ १६ ॥
सत्यं वदामि तत्तत्त्वं निर्णीतं पूर्वसूरिभिः ।
सर्वदेवमयः साक्षात्सर्वभूतमयस्तथा ॥ १७ ॥
सर्वज्ञानसमः सम्यक्सर्वतत्त्वोत्तरोत्तरः ।
सर्वतेजोमयः साक्षात्सर्वानन्दस्वरूपवान् ॥ १८ ॥
मायासमेतः सकलो निष्कलः केवलः परः ।
अस्तिनास्तिद्वयातीतो वाङ्मनोगोचरात्मकः ॥ १९ ॥
अवर्णो वर्णसंयुक्तो नीरूपी विश्वरूपभृत् ।
परमात्मा परं ब्रह्म कश्चिद्देवोऽस्ति चिच्छिवः ॥ २० ॥
शिवादुत्पद्यते शक्तिः शान्त्यतीता परात्मिका ।
अप्रतर्क्यगुणोपेता जृम्भते सा शिवाज्ञया ॥ २१ ॥
सा शक्तिः पञ्चधा भिन्ना भवति ब्रह्मरूपिणी ।
पञ्चभूतात्मिका नित्या तस्या आसीदिदं जगत् ॥ २२ ॥
आदौ व्योम्नि स्थितो भाति साक्षाद्देवः सदाशिवः ।
सदाशिवादीश्वरोऽपि संभूतः पवने स्थितः ॥ २३ ॥
ईश्वरादभवद्रुद्रो वह्नौ स्थित्वा प्रतापवान् ।
रुद्राद्विष्णुर्महातेजा वारितत्त्वे व्यवस्थितः ॥ २४ ॥
विष्णुतत्त्वोदितो ब्रह्मा पृथ्वीतत्त्वे व्यवस्थितः ।
एवं पराशक्तिजाता विश्वपाः पञ्च मूर्तयः ॥ २५ ॥
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथैव च ।
शान्त्यतीता कला ह्येताः स्थिता ब्रह्मादिमूर्तिषु ॥ २६ ॥
तया शिवाज्ञया ह्येता वर्तन्ते सुमहोज्ज्वलाः ।
ब्रह्मणो देवता दैत्या मुनयो मानवास्तथा ॥ २७ ॥

स्वेदजा अण्डजाः सर्वे प्राणिनश्च जरायुजाः ।
तृणगुल्मलतावृक्षाद्यनेकोद्भिज्जकोटयः ॥ २८ ॥
गिरयः सरितश्चान्ये समुद्राश्च सरांसि च ।
संभवन्ति क्रमेणैव तस्माच्छिवमयं जगत् ॥ २९ ॥
यस्तं शिवं केवलचित्स्वरूपं सूर्येन्दुवैश्वानरमण्डलस्थम् ।
गुरुप्रसादात्त्रिमलं क्षयित्वा ध्यात्वा यजन्मोक्षसुखं प्रयाति ॥ ३० ॥
शिवज्ञानं द्विधा ज्ञेयं सगुणं निर्गुणं तथा ।
आदौ सगुणमाश्रित्य पश्चान्निर्गुणमाचरेत् ॥ ३१ ॥
सगुणं बहुधा प्रोक्तं बाह्याभ्यन्तरगोचरम् ।
इन्द्रियादिभिरग्राह्यं निर्गुणं त्वन्तरिक्षवत् ॥ ३२ ॥
एवं तत्त्वपरिज्ञानं गुरुष्वेव व्यवस्थितम् ।
अत एव मुमुक्षूणां पूजनीयश्च सद्गुरुः ॥ ३३ ॥
सदायुरारोग्यमपारभूतिं विद्यां यशः स्वर्गसुखं च मोक्षम् ।
फलानि सर्वाणि नरः समाप्तुं कथं समर्थो गुरुणा विहीनः ॥ ३४ ॥
उक्तलक्षणसंपन्नमाचार्यं सर्ववेदिनम् ।
कर्मणा मनसा वाचा शिववत्पूजयेद्गुरुम् ॥ ३५ ॥
तस्माद्गुरुमुखेणैव दीक्षितो यः शिवार्चकः ।
चतुर्वर्गफलावाप्तिः सुखं तस्य करे स्थिता ॥ ३६ ॥
त्रिकाले वा द्विकाले वा एककालमथापि वा ।
भक्त्या गुरूक्तमार्गेण पूजयेच्चिन्मयं शिवम् ॥ ३७ ॥
अन्तर्यागो बहिर्यागो द्विविधं तच्छिवार्चनम् ।
मुख्या चाभ्यन्तरे पूजा सा च बाह्यार्चनोदिता ॥ ३८ ॥
आत्मस्थमत्यन्तरुचिप्रशान्तमश्रान्तमीशं हि यजन्ति सन्तः ।
तं बाह्यनानाप्रतिमासु बाह्यक्रियाभिरेवाल्पधियो यजन्ति ॥ ३९ ॥
हृत्पद्मं शिवधर्मकन्दसहितं सुज्ञाननालं तथा
नित्यैश्वर्यदलाष्टकं शशिनिभं वैराग्यसत्कर्णिकम् ॥
श्रीरुद्रेश्वरकेसराञ्चितमिदं संचिन्त्य तन्मध्यमे
सूर्येन्दुज्वलवह्निमण्डलगतं ध्यायेच्छिवं चिन्मयम् ॥ ४० ॥
प्रसन्नवदनं शान्तं द्व्यष्टवर्षीयमुज्ज्वलम् ।
अनेककोटिकंदर्पलावण्यसमविग्रहम् ॥ ४१ ॥
चतुर्भुजं मृगीटङ्कवरदाभयधारिणम् ।
चन्द्ररेखाशिरोभूषं शरच्चन्द्रनिभद्युतिम् ॥ ४२ ॥

दिव्याम्बरधरं देवं दिव्यगन्धानुलेपनम् ।
दिव्याभरणशोभाढ्यं दिव्यपुष्पैरलंकृतम् ॥ ४३ ॥
त्रिनेत्रं त्रिगुणाधारं त्रिमलक्षयकारणम् ।
सर्वमङ्गलया देव्या निजवामाङ्कशोभितम् ॥ ४४ ॥
भास्वत्कल्पतरोर्मूले फलपुष्पसमन्विते ।
वेदिकायां समासीनं नवरत्नमयासनम् ॥ ४५ ॥
अद्वैतमच्युतं विष्णुं नित्यं निर्वाणगोचरम् ।
अचिन्त्यमजमव्यक्तमादिमध्यान्तवर्जितम् ॥ ४६ ॥
परं शिवं हृदि ध्यात्वा निश्चयीभूतमानसः ।
यजेदाभ्यन्तरद्रव्यैरवधानेन तद्यथा ॥ ४७ ॥
शमाम्बुपरिषेचनं सकलपूर्णभावाम्बरं
त्रिशक्तिगुणसंयुतं विहितयज्ञसूत्रं तथा ।
स्वसंविदनुलेपनं समधिकानुकम्पाक्षतान्
शिवाय विनिवेदयेत्प्रकटभक्तिपुष्पाणि च ॥ ४८ ॥
धूपमान्तरचतुष्टयेन वै दीपमिन्द्रियगुणोत्तरेण तु ।
कल्पयेच्च सुखदुःखवर्जितं जीवरूपमुपहारमान्तरे ॥ ४९ ॥
रजस्तमःसत्त्वगुणत्रयं च ताम्बूलकं प्राणनमस्कृतिं च ।
इत्येवमाभ्यन्तरमुख्यपूजाद्रव्याणि संपादय शंकराय ॥ ५० ॥
अथवाऽऽवाहनाद्यैस्तमुपचारैश्च राजवत् ।
पूजयस्व शिवं भक्त्या परमात्मानमान्तरे ॥ ५१ ॥
अत एव सदा पूजामिमामाभ्यन्तरीं कुरु ।
समस्तपापदलनीं सर्वदुःखविनाशिनीम् ॥ ५२ ॥
शिवभक्तिप्रदां साक्षान्मनोनैर्मल्यकारिणीम् ।
सर्वैश्वर्यकरीं सम्यग्योगज्ञानप्रदायिनीम् ॥ ५३ ॥

इति श्रीसदाशिवयोगीश्वरविरचितायां शिवयोगदीपिकायां प्रथमः पटलः ।

---

## अथ द्वितीयः पटलः ।

---

अथ ते संप्रवक्ष्यामि शिवपूजाविधिं बुधैः ।
पुनःप्रकारमाख्यातं योगमार्गैकगोचरम् ॥ १ ॥
योगात्संजायते ज्ञानं ज्ञानाद्योगः प्रवर्तते ।
द्वयोः संसिद्धये भूमौ शरीरं रक्षयेद्बुधः ॥ २ ॥

शरीरं कफनाशेन सुस्थैर्यं याति निश्चितम् ।
स कफो हठयोगेन विनश्यति शरीरिणाम् ॥ ३ ॥
शिवयोगः साधकानां साध्यस्तत्साधनं हठः ।
यमादिभिरथाष्टाङ्गैर्देवपूजां समाचरेत् ॥ ४ ॥
यमनियमगुणैश्च स्वात्मसिद्धिं विधाय
स्ववशविविधपीठैरेव भूत्वा स्थितात्मा ।
असुनियमजलेन स्नापयेद्दिव्यलिङ्गं
प्रकटितचतुरङ्गं बाह्यमेतद्विधानम् ॥ ५ ॥
शंभोरपीन्द्रियनिवर्तनमेव गन्धो
ध्यानं प्रसूननिचयो दृढधारणा सा ।
धूपः समाधिरिति शुद्धमहोपहार-
माभ्यन्तराख्यचतुरङ्गविधानमेतत् ॥ ६ ॥
एवमष्टाङ्गयोगेन सदाऽन्तःपद्मसद्मनि ।
पूजयेत्परमं देवं किं बाह्यैर्देवपूजनैः ॥ ७ ॥
स्वात्मन्येव सदाऽष्टाङ्गैः पूजयेच्छिवमव्ययम् ।
शैवः स एव विद्वांश्च स च योगविदां वरः ॥ ८ ॥
सुब्रह्मचर्यं नियताशनं च धृतिर्दया सूनृतमार्जवं च ।
शौचं क्षमाऽस्तेयमथो अहिंसा यमा दशैते मुनिभिः प्रणीताः ॥९॥
संतोष आस्तिक्यगुणो मतिश्च तपो व्रतं शंकरपूजनं च ।
ह्रीर्योगशास्त्रश्रवणं जपश्च प्रदानमेते नियमा दश स्मृताः ॥ १० ॥
यमैश्च नियमैः सम्यगेवं विंशतिसंख्यया ।
स्थिरश्च नियतो भूत्वा स्वात्मशुद्धिं समाचरेत् ॥ ११ ॥
सिद्धाम्बुजं स्वस्तिकमुक्तवीरभद्राहिभुक्केसरिगोमुखानि ।
सुखासनं चैव समङ्कितानि तथा दशैतानि वरासनानि ॥ १२ ॥
गृहिणामम्बुजं नित्यं सिद्धं त्वितरवर्त्मनाम् ।
सुखासनं च सर्वेषामित्येतत्त्रिविधं वरम् ॥ १३ ॥
यानि कानि प्रशस्तानि ह्यासनानि वशानि च ।
तेष्वभीष्टासनासीनो विविक्तस्थानमाश्रयेत् ॥ १४ ॥
तत्र रम्यं मठं कुर्यात्सूक्ष्मद्वारं च निर्व्रणम् ।
प्राकारवेष्टितं शुद्धं बहिःशालासमन्वितम् ॥ १५ ॥
सुगन्धकुसुमाकीर्णं वितानपरिशोभितम् ।
मृदूपधानशय्याद्यैरासनाद्यैः समाकुलम् ॥ १६ ॥

सुधूपवासितं नित्यं गोमयेन सुलेपितम् ।
समित्पुष्पफलोपेतं कन्दमूलफलान्वितम् ॥ १७ ॥
समग्रभस्मरुद्राक्षकुशाजिनविभूषितम् ।
शुद्धान्नपानसंपन्नं सर्वौषधसमाश्रितम् ॥ १८ ॥
सदा मनोहरास्पन्दं मठे वासमुपेत्य च ।
सदाशिवं प्रपूजयेद्हृदि स्थिरसमाहितः ॥ १९ ॥
तद्यथा शृणु हे विद्वन्नादौ केवलकुम्भके ।
प्राणायामजलेनैव स्नापयेच्चिन्मयं शिवम् ॥ २० ॥
प्राणायामस्तथा प्रोक्तः प्राकृतो वैकृतस्तथा ।
ताभ्यां विना जृम्भतेऽसौ केवलः कुम्भकः स्वयम् ॥ २१ ॥
निश्वासोच्छ्वासरूपेण रेचपूरस्वभावतः ।
प्राणानिले वर्तमाने प्राकृतः स उदाहृतः ॥ २२ ॥
आगमोक्तविधानेन रेचपूरककुम्भकैः ।
यदि प्राणनिरोधः स्याद्वैकृतः स उदाहृतः ॥ २३ ॥
प्राकृतं वैकृतं चेति द्वयमेतन्महात्मनः ।
क्षणात्संस्तम्भयेद्यस्तु स हि केवलकुम्भकः ॥ २४ ॥
प्राकृतो मन्त्रयोगः स्याद्वैकृतो लय एव हि ।
हठः केवलकुम्भाख्यो राजयोगोऽमनाः स्मृतः ॥ २५ ॥
प्रथमस्त्वजपायोगो नादो वायोर्लयस्तथा ।
मनोनिलस्थिरं पश्चाद्वृत्तिशून्यं चतुर्थकम् ॥ २६ ॥
प्राणवायुनिरोधेन लभते च चतुष्टयम् ।
तस्मादभ्यासशूरस्त्वं प्राणायामपरो भव ॥ २७ ॥
सकारान्तमिदं बीजं बहिर्याति सबिन्दुकम् ।
सविसर्गं सकारान्तं तद्बीजं प्रविशत्यधः ॥ २८ ॥
प्राणानिलश्च सर्वेषां प्रवर्तकानिवर्तकः ।
एवं जीवोऽजपानामगायत्रीं जपतेऽन्वहम् ॥ २९ ॥
एकविंशतिसहस्रसंख्यया षट्शताधिकमहर्निशं नरः ।
श्रीगुरूक्तविधिनाऽरुणोदये संस्मरन्वहति सोऽजपाफलम् ॥ ३० ॥
अजपां नाम संकल्प्य नरः पापैः प्रमुच्यते ।
शिवयोगमवाप्नोति शीघ्रमेव न संशयः ॥ ३१ ॥
अजपानामगायत्रीमन्त्रं वर्णद्वयं यदा ।
त्रिवेणीसंगमे लीनं स शब्दः प्रणवो भवेत् ॥ ३२ ॥

सोऽहं कृत्वाऽऽत्ममन्त्रं स्वपदपरतरं व्यक्तवर्णद्वयं त-
द्यालुम्पेद्यञ्जने द्वे पुनरपि रचयेद्दिव्यमोंकारमन्त्रम् ।
कृत्वाऽनुस्वारयुक्तं सकलमनुपरं ब्रह्मनाडीं नयेद्यः
पूर्णानन्दः स कुण्डल्यनुभवविकलः कर्मणे सूतिमेति ॥ ३४ ॥

इला स्मृतेन्दुरिति सूर्यसुतेति योगात्
सा पिङ्गलाऽर्क इति विष्णुपदीति तासाम् ।
सा मध्यमाऽग्निरिति गीरिति या त्रिवेणी
योगस्थलं तदिदमेव हि यत्त्रिकूटम् ॥ ३५ ॥

तस्मात्त्रिकूटनामापि त्रिवेणीसंगमस्थलम् ।
शृङ्गाटकचतुष्पीठनामान्येकस्थलस्य हि ॥ ३६ ॥

शब्दद्वारे गते यत्र गन्धद्वारे तथैव च ।
समायोगैश्चतुष्पीठशृङ्गाटकसुसंज्ञिकम् ॥ ३७ ॥

उच्छ्वासनिश्वासकृतासुवायुना त्रिकूटदेशे मनसा सहाङ्ग ।
स्थित्वा सुषुम्नाख्यतदूर्ध्वनाडिकात्रिकोणमार्गे गमनं कुरुष्व ॥३८॥

प्राणानिलस्योद्गमने निरोधे निपातिता चोर्ध्वसुसूक्ष्मशक्तिः ।
प्रत्याहृते मध्यगता प्रबोधिता सा योगतो मूलनिकुञ्चनी स्यात् ३९

तस्मात्त्रिविधशक्तीनां पातेन प्रविबोधनात् ।
आकुञ्चनेन योगीन्द्रा यान्त्यमी परमं पदम् ॥ ४० ॥

अत एव महाश्चर्यं चन्द्रसूर्याग्निसद्मनि ।
संधानं कुरु तद्भक्त्या प्रणवध्वनिना सह ॥ ४१ ॥

त्रयो वेदास्त्रयो देवास्त्रयो लोकास्त्रयो गुणाः ।
ओमित्येकाक्षरे मन्त्रे परे ब्रह्मणि सन्ति वै ॥ ४२ ॥

इति सर्वे च संसिद्धा विदुः केवलकुम्भकम् ।
हठे ह्येकमिदं श्रेष्ठं गोपितं परमाद्भुतम् ॥ ४३ ॥

गमागमौ प्राणवायोर्विधानेन हि गच्छतः ।
यथा तस्य शरीरस्य गमागमविधिस्तथा ॥ ४४ ॥

सिद्धसंमतशास्त्रेषु स्थितः केवलकुम्भकः ।
तथाऽप्यतिरहस्यत्वान्न विजानाति मूढधीः ॥ ४५ ॥

गुरोर्यस्य प्रसादाच्च सिध्येत्केवलकुम्भकः ।
यदि किं करणैर्मुद्राबन्धनैर्वा समाधिभिः ॥ ४६ ॥

निःशब्दे केवले कुम्भे प्राप्ते विष्णोः पदं महत् ।
तथा खलु तयोरैक्यं जीवात्मपरमात्मनोः ॥ ४७ ॥

निःशब्दं तत्त्वमित्याहुरनिर्वाच्यं परं पदम् ।
भूतेन्द्रियादिप्रकृतेस्तत्त्वानां च लयात्मकम् ॥ ४८ ॥
मूलोड्याणजलन्द्रबन्धनविधामभ्यास्यतो योगिनो
वायोरुद्गमने निरङ्कुशविधेस्तद्व्योमसंरोधनात् ॥
भूतानीन्द्रियवर्गतद्गुणमनोहंचित्तबुद्ध्यादयः
सर्वं लीनमुपैति वृत्तिरहितं सौख्यं तदा किंचन ॥ ४९ ॥
योऽपानसूर्यमथ वायुनिरोधनेन
प्राणेन्दुना सह तदूर्ध्वगतं प्रकृत्या ।
योगैकसिद्धिमनिशं कुरुते समस्तां
प्रज्ञावतामपि स एव हि मूलबन्धः ॥ ५० ॥
अधश्चोर्ध्वं च नाभेर्यो बन्धनं कुरुते बलात् ।
उड्डियानमसौ बन्धो रुग्जरामृत्युनाशनः ॥ ५१ ॥
कण्ठमाकुञ्च्य हृदये स्थापयेच्चिबुकं दृढम् ।
एष जालंधरो बन्ध ऊर्ध्वामृतनिबन्धकः ॥ ५२ ॥
अथोर्ध्वमध्यस्थिरबन्धनाभ्यामाकुञ्चनादूर्ध्वमपानवायोः ।
प्राणैकरन्ध्रे मरुतां प्रवेशाच्छीघ्रं भवेत्केवलकुम्भसिद्धिः ॥ ५३ ॥
अयं केवलकुम्भाख्यो यस्याजस्रं वशो भवेत् ।
सदा भवति विख्यातः स एव प्राणसंयमी ॥ ५४ ॥
प्राणायामविधानं यो मासत्रयमपि समाचरेन्नियतः ।
तनुलघुता दीपनता नाडीशुद्धिर्ध्वनि श्चतस्य भवेत् ॥
गगनं पवने प्राप्ते तत्क्षणादुन्मनी भवेत् ।
केवलं कुम्भकं प्राप्तो तावदेव समभ्यसेत् ॥ ५६ ॥
नत्वा गुरुं ब्रह्मविदां वरेण्यं जित्वाऽन्तरस्थं षडमित्रवर्गम् ।
स्थित्वा सदैकान्तविशुद्धदेशे ध्यात्वा शिवं भ्रूयुगमध्यपद्मे ॥ ५७ ॥
श्रुत्वा सदाऽनाहतदिव्यनादं धृत्वा विभिन्नामलबिन्दुरत्नम् ।
पीत्वा सुधां चन्द्रमसः पतन्तीं छित्त्वाऽथ संकल्पविकल्पजालम् ॥
कृत्वा त्रिकूटे दृढबन्धनं ततो गत्वा त्रिकोणे मनसाऽनिलैः सह ।
भित्त्वा तथैवोपरि सूक्ष्मकुण्डलीं नीत्वा सखे विष्णुपदं सुखी भव ॥
इत्थं शिवं विष्णुपदस्वरूपं विष्णुं सदा भावितविष्णुमूर्तिम् ।
विष्णोः पदं केवलकुम्भशुद्धं प्राणाम्बुना स्नानविधौ भजस्व ॥ ६० ॥

इति श्रीसदाशिवयोगीश्वरविरचितायां शिवयोगदीपिकायां द्वितीयः पटलः ।

---

अथ तृतीयः पटलः ।

---

इतियमादिचतुरङ्गविधानं बाह्यमुक्तमभिरञ्जितवाक्यैः ।
अथ शिवार्पितमनाः शृणु वक्ष्ये अन्तरङ्गचतुरङ्गविधानम् ॥ १ ॥
सन्मनोमहितशोणतलेऽस्मिञ्श्रोत्रमुख्यविजितेन्द्रियवर्गात् ।
जातघृष्टविमलामलगन्धैर्लेपनं गुरुसदाशिवलिङ्गे ॥ २ ॥

संकोचमाचरति कूर्म इहाङ्गकाना-
मङ्गैः यथा भुवि तथा निखिलेन्द्रियाणि ।
प्रत्याहरस्वनियतात्मनि संयतात्मा
मन्यामहे परमतत्त्वमिदं तदेव ॥ ३ ॥
आधारमुख्यनलिनैर्विविधैः सुवर्णै-
स्तन्मध्यभासुरतरैः सुमनोभिरङ्ग ।
नानाविधैः सगुणनिर्गुणभावपुष्पैः
श्रीलिङ्गमूर्तिमनिशं हृदि पूजयस्व ॥ ४ ॥
आधारलिङ्गमणिपूरकहृद्विशुद्धि-
भ्रूमध्यमस्तकनभोबिलसंज्ञकानि ।
एतानि तानि यमिनां सुखदायकानि
ध्यानस्थलानि सुविचित्रतराणि नूनम् ॥ ५ ॥
अन्तश्चेतोनियमितबहिश्चक्षुरिष्टासनं च
कायावक्रत्वमनिशमहो ध्यानमुद्रेयमस्याम् ।
स्वात्मानन्दं समरसगतं शान्तमद्वैतरूपं
शैवध्यानं कुरु हृदि सखे ह्यग्रमुक्तस्त्वमेव ॥ ६ ॥
ध्यामस्थलेषु सर्वेषु नव चक्राणि योगिभिः ।
श्रेष्ठानि तानि कथ्यन्ते वक्ष्यामि शृणु तेऽधुना ॥ ७ ॥
मूलाधारे त्रिधा वृत्तं ब्रह्मचक्रं भगोपमम् ।
तत्कन्देऽग्निनिभां ध्यायेदथ शक्तिमभीष्टदाम् ॥ ८ ॥
स्वाधिष्ठानं ततश्चक्रं तत्र चातुर्दलाम्बुजम् ।
तदेवोड्यायनं ध्यायेत्पश्चिमाभिमुखं शिवम् ॥ ९ ॥
पश्चावर्तं नाभिचक्रं सर्पाकारं तडिन्निभम् ।
तत्र कुण्डलिनीं मध्ये शक्तिं सिद्धिप्रदां स्मरेत् ॥ १० ॥
अधोमुखाष्टपत्राब्जयुतं हृच्चक्रमिष्टदम् ।
तन्मध्ये कर्णिकां ज्योतिर्लिङ्गाकारमिमं स्मरेत् ॥ ११ ॥

पञ्चमं कण्ठचक्रं च तत्राङ्गुलिचतुष्टये ।
इडापिङ्गलयोर्मध्ये सुषुम्नां सुस्थितां स्मरेत् ॥ १२ ॥
षष्ठं च घण्टिकालिङ्गमूलं तद्राजदन्तकम् ।
ध्यायेत्तदूर्ध्वं तद्द्वारं तत्र शून्यं सुसिद्धये ॥ १३ ॥
भूचक्रं सप्तमं त्वेकं नालं कन्दं सुवाक्प्रदम् ।
ध्यायेद्दीपशिखाकारं तन्मध्ये ज्ञानलाञ्छनम् ॥ १४ ॥
ब्रह्मरन्ध्रेऽष्टमं चक्रं निर्वाणाख्यं सुसूक्ष्मकम् ।
तत्र जालंधरं धूमशिखाभं मोक्षदं स्मरेत् ॥ १५ ॥
आकाशचक्रं नवमं प्रशस्तं त्रिकूटकं पूर्णगिरीशपीठम् ।
तत्रोर्ध्वशक्तिं शुभदां सुशून्यां ध्यायेद्द्वयाष्टारसरोजमध्ये ॥ १६ ॥
अथ ते षोडशाधारान्कथयामि विशेषतः ।
तेजोध्यानं पदाङ्गुष्ठे कुर्याद्दृष्टिःस्थिरा भवेत् ॥ १७ ॥
पादस्य पार्ष्णिकामूलं द्वितीयाधारसंज्ञिकम् ।
संपीड्य स्थापयेदग्निदीपनं भवति क्षणात् ॥ १८ ॥
आकुञ्चयेत्तथाऽऽधारं सदा संकोचनेन तु ।
अपानमरुतस्थैर्यं जायते तद्द्वितीयकम् ॥ १९ ॥
मेढ्रागारे दण्डसंकोचनेन ब्रह्मग्रन्थींस्त्रीन्समुत्पाट्य पश्चात् ।
चेतोवायूपस्थनाड्यां प्रवेशाद्बिन्दुस्तम्भःसंभवत्येव सिद्धम् ॥२०॥
पञ्चमाधारमोड्यानं ध्यानं कृत्वा मुहुर्मुहुः ।
मलमूत्रकृमीणां च मारणं भवति ध्रुवम् ॥ २१ ॥
नाभ्याधारं ततः षष्ठे प्रणवं यो वदेद्बुधः ।
समाधिनैकचित्तेन तस्य नादे लयो भवेत् ॥ २२ ॥
सप्तमं तु हृदाधारं तत्र प्राणान्निरोधयेत् ।
तदा तन्मध्यकमलं विकासं भजति क्षणात् ॥ २३ ॥
कण्ठाधारं कण्ठमूलं पीडयेच्चिबुकेन तु ।
इडापिङ्गलयोर्वायुप्रवाहः सुस्थिरो भवेत् ॥ २४ ॥
नवमं घण्टिकाधारं जिह्वाग्रं तत्र दापयेत् ।
सुधासारं स्रवत्येव सदा संतृप्तिकारणम् ॥ २५ ॥
या लम्बिका चालनदोहनाभ्यां दीर्घीकृता तां विपरीतमार्गात् ।
यस्तालुमूलान्तरगर्भदेशे प्रवेशयेत्सोन्मनितां प्रयाति ॥ २६ ॥
जिह्वादौ रसनाधारं कुर्याद्यो मथनं यदि ।
सिध्येत्तस्यामृतास्वादः कविता च स्फुटा भवेत् ॥ २७ ॥

द्वादशं दशनाधारमूर्ध्वं तद्राजदन्तकम् ।
षण्मासाद्दृश्यते ज्योतिरन्तर्जिह्वाग्रघट्टनात् ॥ २८ ॥
त्रयोदशं घ्राणमूलं तत्र दृष्टिः स्थिरीकृता ।
यदि चेन्मनसा नित्यं वायुस्तत्र स्थिरो भवेत् ॥ २९ ॥
चतुर्दशं ललाटाख्यमाधारं तत्र योगवित् ।
मनसा वायुमारोप्य सर्वसिद्धिमवाप्नुयात् ॥ ३० ॥
भ्रुवाधारं पञ्चदशं तदूर्ध्वं चक्षुषा बुधः ।
पश्येत्संकिरणाकारं शीघ्रमेव हि पश्यति ॥ ३१ ॥
नेत्राधारं षोडशं तु तदूर्ध्वं चालयेद्बुधः ।
ज्योतिष्पुञ्जमपाङ्गे तत्पश्यति क्षिप्रमेव हि ॥ ३२ ॥
बन्धत्रयेणाऽऽसनबन्धनेन मन्त्रेण नादश्रवणेन योगी ।
भवेत्तदा केवलकुम्भकेन ध्यानेन चित्ताष्टविधावधानी ॥ ३३ ॥
देहपात्रे ज्वलज्ज्ञानवह्नौ भूतगुणाधिकम् ।
क्षिप्त्वा दशाङ्गवल्लिङ्गं धूपयेद्धारणाद्बुधः ॥ ३४ ॥
ध्यानैकगोचरमतिस्थिरता भवेद्या
सा धारणेति शिवयोगविदो वदन्ति ।
शैवक्रमेण रचितेह पुनः प्रकाराद्भू-
म्यादिभूतधरणेन पृथक्पृथक्च ॥ ३५ ॥
धारिणी वारुणी चैव आग्नेया मारुती तथा ।
नभोमयीति कथ्यन्ते सूरिभिः पञ्च धारणाः ॥ ३६ ॥
अत एव तथा प्रोक्ता धारणा योगवित्तमैः ।
सर्वसिद्धिप्रदास्ताश्च सदाभ्यासरतात्मनाम् ॥ ३७ ॥
पादादिजान्वन्तमहीतलेऽस्मिन्वायुं लकारेण समाधिरोप्य ।
स्मरंश्चतुर्बाहुधरं चतुर्मुखं संधारयेद्भूमिजयं समाप्नुयात् ॥ ३८ ॥
वकारेणोपेतं सलिलनिलये जानुनाभ्यन्तदेशे
स्थिरं कृत्वा वायुं मधुरिपुममुं संस्मरेत्पीतचेलम् ।
प्रसन्नास्यं शुद्धस्फटिकमणिनिभं शङ्खचक्राङ्कबाहुं
जलादुत्पन्नोद्यद्भयजयमिदं त्वं भजे वारुणीयम् ॥ ३९ ॥
नाभेः कण्ठान्तदेशे वरशिखिनिलये वायुमारोप्य रेफा-
त्र्यक्षं रुद्रस्वरूपं तरुणरविनिभं भस्मनोद्धूलिताङ्गम् ।
शान्तं शीघ्रप्रसन्नं वरदमभयदं संस्मरन्भावयेत्तं
यस्तस्याभ्यासिनोऽग्नेर्भयहरणमिहासंभवेद्धारणायाः ॥४०॥

गलादिभ्रुवोर्मध्यदेशे समीरस्थले मान्तवर्णेन देदीप्यमानम् ।
प्रकाशस्वरूपं स्मरेदीश्वरं यः सखे वायुवत्क्रीडतीशप्रभावात् ॥४१॥

अभ्रूमध्यादिकान्ते पवनमतिदृढं व्योमदेशे प्रकुर्व-
न्सोमं सोमार्धमौलिं दशकरकमलं पञ्चवक्त्रं त्रिनेत्रम् ।
श्रीकण्ठं सायुधं तं समधिकवरदं सर्वतत्त्वादितत्त्वं
बिन्दुं व्योमस्वरूपं शिवमभययुतं चिन्तयेद्यः स मुक्तः ॥४२॥

इत्येवं धारणाः पञ्च घटिकापञ्चकान्विताः ।
एकैकां धारयेत्ताभिर्देहसिद्धिं भजेन्नरः ॥ ४३ ॥

एतासु भूम्यादिकधारणासु नृणां सदा प्राणनिरोधनेन ।
ये दोषजाः सर्वपुराणरोगा नश्यन्ति शीघ्रं न हि संशयोऽत्र ॥४४॥

ज्ञानेन कर्मणा पञ्च धारणा योगिभिर्धृताः ।
समभ्यासरता यत्र तरन्ति भवसागरम् ॥ ४६ ॥

इयं धारणा । अथ समाधिः—

सुज्ञानदीपं सुधियाऽवलम्ब्य हृदालये त्वं मनसाऽवलोक्य ।
स्वात्मोपहारं परमात्मलिङ्गे समाधिनाऽस्मिन्विनिवेदयस्व ॥४५॥

जलसैन्धवयोर्यथैक्ययोगो भवतीहापि तथैव सामरस्यम् ।
मनसश्च सदाऽऽत्मनश्च योगात्स समाधिरिति कथ्यते मुनीन्द्रैः ॥४७॥

यदा भवति चैकत्वं जीवात्मपरमात्मनोः ।
तदा समाध्यवस्थायां गमिष्यन्ति यमीश्वराः ॥ ४८ ॥

श्रोत्रादीनि न चेन्द्रियाणि विषयाः शब्दादयोऽहं मनो-
वृत्तिर्नैव सुखासुखानि च तथा मानावमानावपि ।
शीतोष्णामितपुण्यपापसुमहासंकल्पजालान्यहो
नैवानेन समाधिना सह मनोलीने परब्रह्मणि ॥ ४९ ॥

युक्ताहारो मुनीन्द्रो निरशनपर एवाथवा युक्तनिद्रो
निद्रात्यक्तो गुहायां वसति विचरति क्ष्मातले निस्पृहात्मा ।
नानाकर्मक्रियासु प्रथितकुशलयुक्तोऽपि वा निष्क्रियो वा
नानाचेष्टास्वजस्रं विहरति च समाधौ समासक्तचेताः ॥ ५० ॥

एवमष्टाङ्गयोगेन हठेनानेन नैष्ठकैः ।
अनालस्यकृताभ्यासात्सिद्धयः शृणु तस्य ताः ॥ ५१ ॥

प्रथमे हतरुग्वर्षे सर्वलोकप्रियो भव ।
वत्सरे च द्वितीयेऽथ कवितां कुरुते सुवाक् ॥
भुजगाद्यैस्तथा दुष्टैस्तृतीये न प्रबाध्यते ॥ ५२ ॥

चतुर्थकेऽनातुरता पिपासा निद्रादिशीतातपवर्जितः स्यात् ।
दूरश्रवाः पञ्चमवत्सरे वाक्सिद्धिं परेषां तनुषु प्रवेशः ॥ ५३ ॥
षष्ठेन वज्रैरपि नैव भिद्यते ततोऽतिवेगी च स दूरदर्शनः ।
त्यजेद्भुवं सप्तमवत्सरेऽथ विभूतयस्तस्य भवेयुरष्टमे ॥ ५४ ॥
गगनचरो दिग्विचरो नवमेऽब्दे यस्तु वज्रकायः स्यात् ।
स मनोवेगी दशमे यत्रेच्छा तत्र गच्छति प्रमनाः ॥ ५५ ॥
एकादशके वर्षे सर्वज्ञः सिद्धिमान्भवेद्योगी ।
द्वादशके शिवतुल्यो कर्ता हर्ता स्वयं भवति ॥ ५६ ॥
द्वादशवर्षैरेवं सद्गुरुनाथस्य पादयोर्भक्त्या ।
निर्विघ्नेन धृतात्मा सिद्धो भवतीति संसिद्धम् ॥ ५७ ॥
अत एव महाश्चर्यं योगमष्टाङ्गमादरात् ।
शिवपूजाङ्गमेतद्धि त्वमेवाभ्यसनं कुरु ॥ ५८ ॥
निरन्तरकृताभ्यासाज्जरामरणवर्जितः ।
स जीवेदिच्छया लोके ततो मुक्तिमवाप्नुयात् ॥ ५९ ॥
यमेन नियमेनैव मन्ये भक्तिरिव स्वयम् ।
स्थिरासनसमायुक्तो महेश्वरपरान्वितः ॥ ६० ॥
चराचरलयस्थानं लिङ्गमाकाशसंज्ञिकम् ।
प्राणेत व्योम्नि संलीने प्राणलिङ्गी भवेन्नरः ॥ ६१ ॥
प्रत्याहारेण संयुक्तः प्रसीदति न संशयः ।
ध्यानधारणसंयुक्तो चरणस्थलवान्सुधीः ॥ ६२ ॥
लिङ्गैक्याद्वैतभावात्मा निश्चलैक्यसमाधिना ।
एवमष्टाङ्गयोगेन वीरशैवो भवेन्नरः ॥ ६३ ॥
तस्मात्सर्वप्रयत्नेन कर्मणा ज्ञानतोऽपि वा ।
त्वमप्यष्टाङ्गयोगेन शिवयोगी भवानघ ॥ ६४ ॥

इति श्रीसदाशिवयोगीश्वरविरचितायां शिवयोगदीपिकायां तृतीयः पटलः ।

---

अथ चतुर्थः पटलः ।

---

यत्सर्वगं श्रुतिशिरःपरमेकमाद्यं
ज्योतिर्मयं दृढविरक्तजनाभिगम्यम् ।
गोसंस्थितं गुरुसदाशिवयोगिनाथं
लिङ्गस्वरूपमहमन्वहमाश्रयामि ॥ १ ॥

राजयोगः परिग्राह्यो विद्वद्भिस्तेन हेतुना ।
यस्य साधनमष्टाङ्गहठयोग इहोच्यते ॥ २ ॥
पूर्वोक्ताष्टविधाङ्गानि हठे तानि स्थितानि च ।
एकैकश्लोकरूपेण कृतानि च मया शृणु ॥ ३ ॥
आहारनिद्रेन्द्रियदेहसर्वव्यापारशीतातपसंज्ञितानाम् ।
जयश्च शान्तिश्च भवेद्यमाङ्गः शनैः शनैः साधयितुं स योग्यः॥४॥
भक्तिर्गुरौ परमतत्त्वपदेऽनुरक्ति-
र्निःसङ्गता स्वयमुपागतलाभतुष्टिः ।
एकान्तवासपरता च मनोनिवृत्ति-
र्वैराग्यभाव इति ये नियमास्त एव ॥ ५ ॥
स्वस्वरूपे सर्वकालमासनत्वं सुखासनम् ।
सर्ववस्तुन्युदासीनभावश्चाऽऽसनमीरितम् ॥ ६ ॥
विदुर्बुधा रेचकपूरकुम्भसंघट्टनश्वासतया प्रयत्नात् ।
प्राणस्थिरत्वं जगतां च मिथ्या चित्तं स्थिरं प्राणनिरोधभावः॥७॥
चित्तस्यान्तर्मुखेन प्रतिहतबहुचैतन्यकल्लोलजाल-
स्योत्पन्नस्यास्य नानाविपुलमतिविकारस्य संसक्तिरेव ।
तत्तन्नानाविकारग्रसनमिति तथा कथ्यते योगविद्भिः
प्रत्याहारः स एवाविचलितसुमनास्तं कदाऽहं भजामि ।
सोऽहंभावात्प्रकटितपदमद्वैतमुख्यस्वभावं
यद्यल्लोके स्फुरति खलु तदात्मस्वरूपस्वभावम् ।
सम्यग्दृष्टिर्गुरुकरुणया सर्वभूतेषु याति
स्वात्वारामः स भवति सखे ध्यानमार्गैकनिष्ठः ॥ ९ ॥
स्फुरति परमतत्त्वं तस्य बाह्यान्तरे यत्
सततममलमत्या धारणं निश्चलेन ।
पुनरपि च वदामस्ते प्रकाशोऽयमास्ते
चलनरहितचित्तं केवलं धारणा सा ॥ १० ॥
निजानुभवशीलता निखिलतत्त्वसाम्यश्रुतेः
स्मृतेरपि चलस्थितिस्थिरतया निदिध्यासता ।
सदैकपरिभावनासहजता ह्यनायासनात्
समाधिरिति कीर्तिता सततनिर्विकल्पात्मता ॥ ११ ॥
बाह्ये चाभ्यन्तरे ब्रह्म सर्वजन्तुषु भासते ।
तथाऽपि गुरुमज्ञात्वा ते न पश्यन्ति तत्पदम् ॥ १२ ॥

अथ शृणु महाश्चर्यं राजयोगाभिधानकम् ।
इमं सद्गुरुणा याति सज्जनो नान्यकर्मभिः ॥ १३ ॥
दुष्कराभ्यासयोगेन महायासेन किं फलम् ।
क्षणेन लभ्यते ब्रह्म सद्गुरोरवलोकनात् ॥ १४ ॥
खण्डज्ञानवतां च षट्समयसंमोहान्धकारात्मनां
नानावेदपुराणशास्त्रकविताबाग्वैखरीशालिनाम् ।
मूढानां चतुराश्रमैकनियमाद्गर्वात्मकानां कथं
योगज्ञानमिदं भवेद्गुरुमुखाभावेऽपरोक्षात्मकम् ॥ १५ ॥
क्षेत्रार्थरम्यगृहपुत्रकलत्रमित्रै—
र्वादैर्महारसरसायनधातुवादैः ।
तैः काममन्त्रलययोगहठादिभेदै-
र्बद्धात्मनां कथमिहास्ति गुरुप्रसादः ॥ १६ ॥
आदौ वर्णाश्रमाचारगुरौ ब्रह्मज्ञताऽस्ति चेत् ।
भजेत्तमेव यत्नेन नोचेदन्यं गुरुं भजेत् ॥ १७ ॥
आत्मानमद्वंद्वमनन्तमाद्यं निरञ्जनं निश्चलनित्यदीप्तम् ।
सच्चिन्मयानन्दपरामृतं यो वेत्ति स्वभावेन गुरुः स एव ॥ १८ ॥
ज्ञानवैराग्यलाभेन तृणीकृत्य जगत्त्रयम् ।
आदौ सद्गुरुमाश्रित्य तत्त्वज्ञानं समभ्यसेत् ॥ १९ ॥
ज्ञातृत्वमन्तरिक्षं च समानो वायुरेव च ।
श्रोत्रमग्निर्ध्वनिर्वारिवाग्भूः खे तत्त्वपञ्चकम् ॥ २० ॥
मनश्चैव वियद्व्यानो वायुश्चर्म धनंजयः ।
स्पर्शोऽम्भश्च क्षमा पाणिर्मरुतस्तत्त्वपञ्चकम् ॥ २१ ॥
नभो बुद्धिरुदानं च मरुद्दूर्वाग्निरेव च ।
पायू रूपं धरा पादो वह्नेर्यत्तत्त्वपञ्चकम् ॥ २२ ॥
चित्तं विष्णुपदं वायुरपानो रसनानलः ।
रसो जलमुपस्थं भूरपां तत्त्वानि पञ्चकम् ॥ २३ ॥
अहंकारस्तथा प्राणो घ्राणो गन्धो गुदं च हि ।
भूमितत्त्वानि कीर्त्यन्ते पञ्चधा तत्त्ववेदिभिः ॥ २५ ॥
पञ्चविंशतितत्त्वानि पञ्चभूतस्थितानि च ।
तानि यो वेत्ति तत्त्वज्ञः स शिवः स च मुक्तिभाक् ॥
आध्यात्मिकाधिभूताधिदैवतानि यथाक्रमम् ।
दशेन्द्रियेषु विभजञ्जीवान्तःकरणेषु च ॥ २६ ॥

नाहं भूतगुणेन्द्रियाणि च मनोऽहंचित्तबुद्धिर्वपुः
प्राणाश्चाऽऽश्रमधर्मकर्मनिरतो नैव प्रपञ्चोऽखिलम् ।
नित्यं निश्चलमेकमच्युतमजं शान्तं शिवं निर्गुणं
शुद्धं बुद्धपदं तु यत्तदहमस्मीति स्मरञ्जीवति ॥
देहत्रये प्रथितषोडशधाविकारान्
लिङ्गानि सप्तदशधा नवधा पदार्थान् ।
आत्मानमष्टविधया प्रकृतेः स्वभावान्
ज्ञात्वा तदन्य इति जीवति यो महात्मा ॥ २८ ॥
सत्यं ज्ञानमनन्तं यद्ब्रह्मेति वदति श्रुतिः ।
मुक्तानन्दस्वरूपं च ननु तत्त्वमिति स्थितः ॥ २९ ॥
नैतदहं नैतदहं चेति च यदन्यद्विभावयाऽऽत्मानम् ।
सोऽहमिति सोऽहमिति ननु भावय सर्वं त्वमात्मानम् ॥
हृदि ज्ञानादेव मोक्ष इत्येतद्वाक्यमादरात् ।
गृहीत्वा ज्ञानयोगेऽस्मिन्समाहितमना भव ॥ ३१ ॥
अतः परं तारकं गुह्यं दृष्टप्रत्ययसंयुतम् ।
ममानुभवसंसिद्धं योगं प्राणसखे शृणु ॥ ३२ ॥
मन्त्रेण लययोगेन हठयोगेन सर्वदा ।
यावद्ब्रह्म न जानन्ति तावत्क्लिश्यन्ति पण्डिताः ॥
नेत्रे निमीलिते नित्यं किंचिदुन्मीलिते तदा ।
यो मनश्चक्षुषा ब्रह्म पश्यतीति स योगिराट् ॥ ३४ ॥
शशिभास्करयोर्मध्ये तारयोः स्थिरतेजसः ।
बिन्दुद्वयं च संयोज्य ब्रह्मतारकमभ्यसेत् ॥ ३५ ॥
बाह्यान्तर्मध्यलक्ष्येषु ब्रह्मदर्शनतत्परः ।
दृष्टादृष्टस्वरूपाणि ननु तानि विलोकय ॥ ३६ ॥
मूलकन्दादण्डलग्नाद्ब्रह्मनाडी शशिप्रभा ।
तस्य मध्ये तडित्कोटिनिभा तामूर्ध्वगामिनीम् ॥ ३७ ॥
मनसा लक्षयेन्मूर्तिं सदृशीं बिसतन्तुना ।
आब्रह्मरन्ध्रपर्यन्तगतां सिद्धिप्रदां स्मरेत् ॥ ३८ ॥
ललाटोर्ध्वे तथा लक्ष्ये योगी गोल्लाटमण्डपे ।
विस्फुरत्तारकाकारं मनसा लक्षयेत्सदा ॥ ३९ ॥
अथवा कर्णयोर्द्वारे तर्जनीभ्यां निरोधयेत् ।
श्रीहट्टमस्तके नादं घुंघुंकारं शृणोति च ॥ ४० ॥

चक्षुर्मध्ये तथा नीलज्योतीरूपं विलोकयेत् ।
अन्तर्लक्ष्यमिति ज्ञेयं बहिर्लक्ष्यमथ शृणु ॥ ४१ ॥
नासाग्रदेशाच्चतुरः षडष्ट तथा दश द्वादश संख्ययाऽङ्गुलिः ।
बहिस्थनीलं च सुधूम्ररक्ततरङ्गपीताद्भुततत्त्वपञ्चकम् ॥४२॥
अथवा सन्मुखाकाशं स्थिरदृष्ट्या विलोकयेत् ।
ज्योतिर्मयूखा दृश्यन्ते योगिभिर्धीरमानसैः ॥४३॥
दृष्ट्यग्रे वाऽप्यपाङ्गे वा तप्तकाञ्चनसंनिभाम् ।
भूमिं संलक्षयेद्दृष्टिः स्थिरा भवति योगिनः ॥४४॥
अथवा शिरसश्चोर्ध्वं द्वादशाङ्गुलसंमिते ।
ज्योतिष्पुञ्जं निराकारं लक्षयेन्मुक्तिदं भवेत् ॥४५॥
यत्र यत्रार्थवान्योगी तत्र तत्र विलक्षयेत् ।
आकाशमेव यत्तस्य चित्तं भवति तादृशम् ॥ ४६ ॥
इत्येवं विविधाकारं बहिर्लक्ष्यमुदीरितम् ।
शृणुष्व मध्यलक्ष्यं च कथितं पूर्वसूरिभिः ॥ ४७ ॥
श्वेतादिवर्णनवखण्डसुचन्द्रसूर्य-
सौदामिनीवह्निशिखेन बिम्बात् ।
ज्वलन्नभो वा स्थलहीनमेकं
विलक्षयेत्तत्खलु मध्यलक्ष्यम् ॥ ४८ ॥
निराकारं पश्येद्गुणरहितमाकाशमथवा
तमोरूपं गाढं स्फुरदुरुपराकाशमथवा ।
महाकाशं कालानलनिभमथात्यन्तरुचिरं
परं तत्त्वाकाशं रविशतनिभं सूर्यखमिति ॥ ४९ ॥
व्योमपञ्चकमेतद्धि तद्बाह्याभ्यन्तरस्थितम् ।
यः पश्यति नरो लक्ष्ये स व्योमसदृशो भवेत् ॥ ५० ॥
तारणाच्च गुरुशिष्ययोर्द्वयोस्तारकोऽयमिति योगसंज्ञिकः ।
तारकं भवमहाब्धितारकं तत्त्वमेव परिशीलनं कुरु ॥५१॥
फलमेकं द्विधाऽऽचार्या यथार्थं सांख्यतारयोः ।
उपाधिरहितः सांख्यो योगः सोपाधिकः स्वयम् ॥ ५२ ।

इति श्रीसदाशिवयोगीश्वरविरचितायां शिवयोगदीपिकायां चतुर्थः पटलः ।

---

अथ पञ्चमः पटलः ।

---

पुनश्चातिरहस्यं यज्ज्योतिषां निलयं महत् ।
दिव्यलिङ्गस्थलं दृष्टमन्तर्लक्ष्यात्मकं शृणु ॥ १ ॥
नान्तस्थलं बहिर्व्याप्तमपरोक्षस्वरूपकम् ।
आकाशाभ्यन्तराकाशमन्तर्लक्ष्यं तदेव हि ॥ २ ॥
लक्ष्यलीनमनसाऽनिलेन यो वर्तते चलिततारको भवेत् ।
खेचरीयमथ सैव शांभवी मुद्रयाऽस्तु कृतया जगद्गुरुः ॥ ३ ॥
लोकेऽन्तःखेचरी मुद्रा अज्ञात्वा बाह्यखेचरीम् ।
अवलम्ब्य रता केचिज्जिह्वाछेदनकर्मणा ॥ ४ ॥
तालुमूलद्वादशान्तमध्यं प्रत्यक्कलात्मकम् ।
यत्तस्मिञ्ज्योतिषि मनो दत्त्वा निजहृदि क्रमात् ॥ ५ ॥
दृष्टिस्तु पूर्णिमा ज्ञेयं दृश्यमादौ तमोमयम् ।
तन्मध्ये मनसा पश्येज्ज्योतिर्लिङ्गं सुनिश्चलम् ॥ ६ ॥
नासाग्रदत्तनिमिषोन्मिषबाह्यदृष्ट्या
लक्ष्ये सदाशिवविमर्शकगूढदृष्ट्या ।
ज्योतिःस्वरूपमचलं परिणामहीनं
पश्यन्ति ये त इह संयमिनः कृतार्थाः ॥ ७ ॥
पश्चिमाभिमुखं लिङ्गमभिन्नवलयाकृतिम् ।
त्वं पूर्वाभिमुखो भूत्वा पश्य पश्य महाद्भुतम् ॥ ८ ॥
यदा तज्ज्योतिरोंकारं ब्रह्माच्युतशिवात्मकम् ।
पश्यन्ति सूरयः शान्तं तद्विष्णोः परमं पदम् ॥ ९ ॥
पूर्णेन्दुबिम्ब इव सन्मणिदीपिकेव
मध्याह्नसूर्य इव वह्निशिखेव नित्यम् ॥
विद्युत्प्रभेव शिवलिङ्गमहो विचित्रं
लक्ष्यान्तरे ज्वलति पश्यति चक्षुरग्रे ॥ १० ॥
आत्मलिङ्गमिदं पश्य किमन्यैः कर्मविभ्रमैः ।
अहिंसाद्यष्टपुष्पैस्तु मानसैरङ्ग पूजय ॥ ११ ॥
पुष्पाण्यहिंसेन्द्रियनिग्रहश्च दयाक्षमाज्ञानसमाह्वयानि ।
ध्यानं तपः सत्यममीभिरेवं प्रपूजयेदात्मनि सिद्धलिङ्गम् ॥ १२ ॥
यो निमीलदनिमीलदम्बको रेचपूरपरिवर्जितानिलः ।
सर्वसंशयविभिन्नमानसो राजयोगपदभाक्स एव हि ॥ १३ ॥

---

शृङ्गाटके यस्तु मनो नियम्य त्रिकोणगामी शशिभास्कराभ्याम् ।
बाह्यान्तरङ्गप्रवणैकगोभिरष्टावधानी हठराजयोगी ॥ १४ ॥
दृग्दृश्यमानसंबन्धादुन्मन्यन्तं विचिन्तयेत् ।
शिवयोगमिदं गुह्यं जीवन्मुक्तिकरं मुने ॥ १५ ॥
रोचिस्ताडिद्धूम्रकबिन्दुनादं कलाभखद्योतरवीन्दुदीप्ताः ।
तत्प्रत्ययानेकसुवर्णवर्णा किञ्जल्कदण्डा नवरत्नमुख्याः ॥ १६ ॥
वक्त्रेणाऽऽपूर्य वायुं हुतवहनिलयेऽपानमाकृष्य धृत्वा
स्वाङ्गुष्ठाद्यङ्गुलीभिः स्वकरतलयोः षड्भिरेवं निरुध्य ॥
श्रोत्रे नेत्रे च नासापुटयुगलमथानेन मार्गेण धीराः
पश्यन्ति प्रत्ययांस्तान्प्रणवबहुविधध्यानसंलीनचित्ताः॥१७॥
दृष्टिर्वा रविसोमपावकयुतां चन्द्रार्कयोरागमे
दीप्तानिश्चलगेहदीपनिकटे वानिर्मतीनामपि ॥
दृश्यन्ते स्फुरिता स्फुटा नयनयोरग्रे च तत्प्रत्यया-
स्तेषां तत्परचेतसां विगलिता तद्व्यावृतीनां मुने ॥ १८ ॥
प्रमाणप्रत्ययातीतं शान्तं तेजोमयात्मकम् ।
तदतीतं परब्रह्म चेति विद्वद्भिरीरितम् ॥ १९ ॥
भावयोगमसंकल्पाविकल्पास्पदमद्भुतम् ।
संप्राप्तो यस्तस्य भवेदवस्थाचोन्मनी हि सा ॥ २० ॥
आधारमध्यहृद्व्याप्तं नादबिन्दुकलात्मकम् ।
तदतीतं स्वरूपं यत्तदेव परमं पदम् ॥ २१ ॥
यः समेति मनसा निराश्रयं निरवलम्बपदतत्त्वमव्ययम् ।
भावनाविरहितं निरामयं परशिवो हृदि स तन्मयो भवेत् ॥२२
अणुमात्रं यदि भवेदस्तित्वं विदुषां भुवि ।
तदेव बन्धहेतुः स्याद्भावाभावावुभौ त्यजेत् ॥ २३ ॥
ज्ञानज्ञेयौ ध्यानध्येयौ लक्ष्यालक्ष्ये भवाभवौ ।
ऊहापोहौ यो दृग्दृश्ये सर्वं त्यक्त्वा जीवन्मुक्तः ॥ २४ ॥
सर्वास्ववस्थास्वकृतप्रयत्नो निश्चिन्तभावो मृतवत्स तिष्ठन् ।
कल्लोलहीनाम्बुधिवन्निवातप्रदीपवत्तत्त्वमयः सुखी स्यात् ॥ २५ ॥
शृणु चिच्छिवपूजायाः प्रकारं कथयाम्यहम् ।
रहस्यं सर्वशास्त्रार्थसारं सद्यो विमुक्तिदम् ॥ २६ ॥
निश्चिन्तैव शिवध्यानं निष्क्रिया तस्य पूजनम् ।
प्रदक्षिणं निश्चलत्वं सोऽहंभावो नमस्क्रिया ॥ २७ ॥

मौनं संकीर्तनं तस्य जपस्तु परिपूर्णता ।
कृत्याकृत्यज्ञता शीलं निर्वाणं समदर्शनम् ॥ २८ ॥
सर्वेन्द्रियगुणरहिता रूपातीता निरञ्जना शान्ता ।
भावाभावविदूरा सहजावस्थेति सा कथिता ॥ २९ ॥
जाग्रत्स्वप्नसुषुप्तिश्च तुरीयं च तथैव च ।
तुर्यातीतं च सहजं न किंचिच्चिन्तयेत्ततः ॥ ३० ॥
विहाय कर्माण्यघसंयुतानि गृह्णाति कर्माणि शुभान्वितानि ।
स्वर्गोन्मुखो यः पुरुषः प्रवृत्तो नैवाधिकारी स तु जागरेऽपि ॥ ३१ ॥
अलमलमखिलसुखैकपदश्चेति कदाचिन्निवृत्तमनो यः ।
स तु जाग्रदवस्थायां तिष्ठन्मोक्षोन्मुखो भवति ॥ ३२ ॥
संसारोत्तरणं ममास्ति कथमित्याचार्यसंसेवनं
विद्वत्संगमकामविस्मृतिसदाचारैः समं मौनताम् ।
वैराग्यश्रुतिशास्त्रनिश्चयधिया कामाद्यरिध्वंसनं
योगाभ्यासमुपैति दम्भरहितं जाग्रत्स्वभावान्वितः ॥ ३३ ॥
मृतो जाग्रदवस्थासु यदि चेदन्यजन्मनि ।
स्वप्नावस्थां गतो याति पूर्वाभ्यासवशाद्भुवि ॥ ३४ ॥
स्वप्ने यदखिलं लोकं पश्यञ्शरदभ्ररूप इव चित्ते ।
तिष्ठन्सत्तामात्रः स्वप्नावस्थान्वितश्चरति ॥ ३३ ॥
गते द्वैतभावे स्थिते शान्तिशेषे प्रकाशस्वभावे चिदानन्दभानौ ।
बहिर्वृत्तियुक्तोऽप्यहो हृत्प्रवृत्तः सुषुप्तिस्थितश्चित्रवद्भाति योगी ॥
अनमृतोऽप्यमृतक्षयमानसो विदितशान्ततनुर्निरहंकृतिः ।
गलितगन्धगुणः स तुर्यभाग्वहति जीवति मुक्तिमभावनः ॥ ३७ ॥
संपूर्णकुम्भ इव वारिनिधानमध्ये
संशून्यकुम्भ इव विष्णुपदान्तराले ।
अन्तर्बहिः प्रथितपूर्णसुशून्यभावः
सचित्रदीप इव भाति तुरीययुक्तः ॥ ३८ ॥
कैश्चिद्ब्रह्मेति कैश्चिद्धरिरिति शिव इत्यादि कैश्चित्स नाना—
भेदैः प्रोक्तं सशून्यप्रकृतिपुरुषकालार्थरूपीति कैश्चित् ।
कैश्चिल्लोकैर्विकल्पात्मकबहुवचनैर्देहयुक्तोऽपि नित्यं
मुक्तः स्याद्यस्तुरीयातीतसमाख्यामवस्थां समेत्य ॥
तस्मात्सर्वप्रयत्नेन क्रमादभ्यासयोगतः ।
तुर्यातीतां तामवस्थां समासाद्य सुखी भव ॥ ४० ॥

सर्वावस्थां गतो वाऽपि सर्वावस्थां न संस्मर ।
त्यज सङ्गमशेषं च मनोऽन्तर्बहिरन्वितम् ॥ ४१ ॥
निवर्तयान्यकर्माणि शिवयोगं प्रवर्तय ।
सहजाममनस्कान्तां मुद्रां सच्चिन्मयीं भज ॥ ४२ ॥
आत्मानं गगनं कृत्वा बिन्दुं कृत्वा तथैव च ।
द्वयं समरसं कुर्यादमनस्ककला हि सा ॥ ४३ ॥
स्वप्नजागरणातीतं मृतजीवनवर्जितम् ।
स्वामिञ्शिवामनस्काख्यं गमिष्यामः कदा वयम् ॥ ४४ ॥
सचराचरजगदखिलं यत्किंचिदिदं भवेन्मनोदृश्यम् ।
मनसोऽप्युन्मनितां याति स तत्त्वं कथं न भवेत् ॥ ४५ ॥
अथवा यत्र मनः संयाति हि तत्रैव तन्मनः स्थाप्य ।
तत्कारणाल्लयः स्याद्वृद्धिः स्याद्धार्यमाणं तु ॥ ४६ ॥
यथेच्छया मनो गच्छेत्स्वयमेव निवर्तते ।
निरङ्कुशेन विधिना करटीव मदोत्कटः ॥ ४७ ॥
नाद एव लयश्रेष्ठो मुद्राणां खेचरी वरा ।
योगश्रेष्ठो निरालम्बो ह्यवस्थासु मनोन्मनी ॥ ४८ ॥
राजयोगस्य मुद्रां तामित्य योगी मनोन्मनीम् ।
विचरत्यखिलाँल्लोकान्बालोन्मत्तपिशाचवत् ॥
जीवन्मुक्तिप्रकारस्य योग एव न चान्यथा ।
स एव सिद्धिदः सम्यक्सर्वदर्शनसंमतः ॥ ५० ॥
मन्त्रलयावारम्भकघटसंज्ञौ परिचयो हठः स्यात् ।
समनिष्पत्तिस्मृत एव महान्राजयोगस्तु ॥ ५१ ॥
तस्मात्संसेव्य एवंविध इह यमिना श्रेयसे योगमार्गो
ह्यालस्यं धूर्तसङ्गं स्वजनकुपितशास्त्रान्धकारोरुरोगान् ।
जित्वा मन्वन्तरायान्पुनरपि च महायोगजैश्वर्यसिद्धि-
स्त्यक्त्वा स्थित्वा सुदेशे सुजनपरिवृतेऽबाधिते धर्मराज्ये ॥ ५२ ॥
तापत्रयं नवविधं व्यवहारभावाः
षट्कौशिकानि षडमित्रकपञ्चकोशा ।
षड्भावजा विकृतयश्च षडूर्मयश्च
निष्पन्नयोगमहतां भुवि न स्युरेव ॥ ५३ ॥
महादीप्तवह्निर्दहेच्छुष्कमात्रं यथा पुण्यपापात्मकं सर्वकर्म ।
तथा निर्दहेत्क्षणाज्ज्ञानवह्निस्ततो मुक्तिमायाति निष्पन्नयोगी॥५४॥

अत्यल्पदीपः सुमहत्तमस्तु विनाशयेद्यो निबिडं हठाद्यथा ।
अल्पोऽप्यहो योगसमाधिरेष विनाशयेत्कर्म शुभाशुभं तथा ॥५५॥
यो यो योगसमुद्यतोऽवनितले यात्यन्तिकामापदं
स्वर्लोकान्समुपेत्य शाश्वतसुखं तत्रानुभूय स्वयम् ।
संजायेत ततः सतां श्रुतिमतां यस्मिन्कुले योगिनां
तुष्टिं प्राप्य निवर्तयेद्विभवं योगी शिवाख्यं परम् ॥ ५६ ॥
ब्रह्मणि परे हृदयमपि यस्य लीनं
तस्य मातापितराविह परत्र चरितार्थौ ।
तस्य कुलजाः स्युरनघा जयन्ति सर्वे
तस्य पदसंघटितभूरतिपवित्रा ॥ ५७ ॥
योगशास्त्रे रहस्यानि सिद्धसिद्धान्तपद्धतिः ।
संक्षेपेण कृता बोध्या शिवयोगप्रदीपिका ॥ ५८ ॥

अभ्यासशूराय जितेन्द्रियाय शिवे गुरौ भक्तिसुनिश्चलाय ।
देयं रहस्यं शिवयोगशास्त्रं यो मूढदाता गुरुपातकी स्यात् ॥५९॥
पुरबाणानजसायकान्समुद्रकृतून्करेषूंस्तथा
निधिबाणांश्च पञ्च पञ्चधा पटलिकास्वेवं शिवाङ्कं मया ॥
परमित्यादिकशब्दजालविविधच्छन्दोभिरेतत्कृतं
गिरिनागाम्बकसंख्ययाऽपि सकलं वन्यैश्च योगान्बहून् ॥ ६० ॥

| | |
|---|---|
| पुरबाणान् ९३ | अजसायकान् ९९ |
| समुद्रकृतून् ६४ | करेषून् ९२ |
| निधिबाणान् ९३ | गिरिनागाम्बक २८७ |

इति श्रीसदाशिवयोगीश्वरविरचितायां शिवयोगदीपिकायां योगशास्त्रे राजयोगप्रकारेऽमनस्कविधानो नाम पञ्चमः पटलः ।

---

समाप्तश्चायं ग्रन्थः ।

# सदाशिवब्रह्मेन्द्रपञ्चरत्नम् ।

यत्संदर्शनमात्राद्भक्तिर्जाताऽप्यकर्णविद्धस्य ।
तत्संदर्शनमधुना कृत्वा नूनं कृतार्थोऽस्मि ॥ १ ॥
योऽनिशमात्मन्येव ह्यात्मानं संदधन्वीथ्याम् ।
भस्मच्छन्नानल इव जडाकृतिश्चरति तं नौमि ॥ २ ॥
यस्य विलोकनमात्राच्चेतसि संजायते शीघ्रम् ।
वैराग्यमचलमखिलेष्वपि विषयेषु प्रणौमि तं यमिनम् ॥ ३ ॥
पुरतो भवतु कृपाब्धिः पुरवैरिनिविष्टमानसः सोऽयम् ।
परमशिवेन्द्रकराम्बुजसंजातो यः सदाशिवेन्द्रो मे ॥ ४ ॥
उन्मत्तवत्संचरतीह शिष्यस्तवेति लोकस्य वचांसि शृण्वन् ।
खिद्यन्नुवाचास्य गुरुः पुराऽहो ह्युन्मत्तता मे न हि तादृशीति ॥ ५ ॥
पञ्चकमेतद्भक्त्या श्लोकानां विरचितं लोके ।
यः पठति सोऽपि गच्छेत्करुणां शीघ्रं सदाशिवेन्द्रस्य ॥ ६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीसच्चिदानन्दशिवाभिनवनृसिंहभारती-
स्वामिविरचितं श्रीसदाशिवब्रह्मेन्द्रपञ्चरत्नं संपूर्णम् ।

# आत्मविद्याविलासः ।

वटतरुनिकटनिवासं पटुतरविज्ञानमुद्रितकराब्जम् ।
कंचन देशिकमाद्यं कैवल्यानन्दकन्दलं वन्दे ॥ १ ॥
निरवधिसंसृतिनीरधिनिपतितजनतारणस्फुरन्नौकाम् ।
परमतभेदनघुटिकां परमशिवेन्द्रार्यपादुकां नौमि ॥ २ ॥
देशिकपरमशिवेन्द्रादेशवशोद्बुद्धदिव्यमहिमाऽहम् । *
स्वात्मनि विश्रान्तिकृते सरसं प्रस्तौमि किंचिदिदम् ॥ ३ ॥
निरुपमनित्यनिरीहो निष्कलनिर्मायनिर्गुणाकारः ।
विगलितसर्वविकल्पः शुद्धो बुद्धश्चकास्ति परमात्मा ॥ ४ ॥
स्वाविद्यैकनिबद्धः कुर्वन्कर्माणि मुह्यमानः सन् ।
दैवाद्विधूतबन्धः स्वात्मज्ञानान्मुनिर्जयति ॥ ५ ॥

* शिवेन्द्रोपदेशवशात् ।

मायावशेन सुप्तो मध्ये पश्यन्सहस्रशः स्वप्नान् ।
देशिकवचःप्रबुद्धो दीव्यत्यानन्दवारिधौ कोऽपि ॥ ६ ॥
प्राकृतभावमपास्य स्वीकृतनिजरूपसच्चिदानन्दः ।
गुरुवरकरुणापाङ्गाद्गौरवमासाद्य माद्यति प्राज्ञः ॥ ७ ॥
श्रीगुरुकृपया सच्चित्सुखनिजरूपे निमग्नधीर्मौनी ।
विहरति कश्चन विबुधः शान्ताहन्तो नितान्तमुदितान्तः॥८॥
गुरुवरकरुणालहरीव्यतिकरभरशीतलस्वान्तः ।
रमते यतिवर एको निरुपमसुखसीमनि स्वैरम् ॥ ९ ॥
श्रीदेशिकवरकरुणारविकरसमपोहितान्तरध्वान्तः ।
विहरन्मस्करिवर्यो निरवधिकानन्दनीरधावास्ते ॥ १० ॥
जनिविपरीतक्रमतो बुद्ध्या प्रविलाप्य पञ्च भूतानि ।
परिशिष्टमात्मतत्त्वं ध्यायन्नास्ते[1] मुनिः शान्तः ॥ ११ ॥
जगदखिलमिदमसारं मायिकमेवेति मनसि मन्वानः ।
पर्यटति पाटिताशः प्रगलितमदमानमत्सरः कोऽपि ॥ १२॥
नाऽऽत्मनि किंचिन्माया तत्कार्यं वाऽस्ति वस्तुतो विमले ।
इति निश्चयवानन्तर्हृष्यत्यानन्दनिर्भरो योगी ॥ १३ ॥
त्वमहमभिमानहीनो मोदितनानाजनाचारः ।
विहरति बालवदेको विमलसुखाम्भोनिधौ मग्नः ॥ १४ ॥
अवधूतकर्मजालो जडबधिरान्धोपमः कोऽपि ।
आत्मारामो यमिराडटवीकोणेष्वटन्नास्ते ॥ १५ ॥
शान्त्या दृढोपगूढः शान्तसमस्तान्यवेदनोदारः ।
रमते रसज्ञ एको रम्ये स्वानन्दपर्यङ्के ॥ १६ ॥
उन्मूलितविषयारिः स्वीकृतवैराग्यसर्वस्वः ।
स्वात्मानन्दमहिम्नि स्वाराज्येऽस्मिन्विराजते यमिराट्[3] ॥१७॥
सवितर्यपि शीतरुचौ चन्द्रे तीक्ष्णेऽप्यधोवहत्यग्नौ ।
मायिकमिदमिति जानञ्जीवन्मुक्तो न विस्मयी भवति॥१८॥
अज्ञानवैरिविजयी प्रज्ञामातङ्गमस्तकारूढः ।
विहरति संयमिराजः समरससुखधाम्नि सर्वतो रम्ये ॥१९॥
शान्ताहंकृतिदोषः सुसमाहितमानसः कोऽपि ।
पूर्णेन्दुशिशिरभावो राजत्यानन्दसत्यचिद्रसिकः ॥ २० ॥

---

१ पश्यन्नास्ते । २ यति ३ यति ।

तिष्ठन्परत्र धाम्नि स्वीयसुखास्वादपरवशः कोऽपि ।
क्वापि ध्यायति कुहचिद्गायति कुत्रापि नृत्यति स्वैरम् ॥ २१ ॥
अगृहीताङ्ककलङ्कः प्रशमितसंकल्पविभ्रमः प्राज्ञः ।
न्यक्कृतकार्यकलापस्तिष्ठत्यापूर्णसीमनि क्वापि ॥ २२ ॥
चपलं मनःकुरङ्गं चारु गृहीत्वा विमर्शवागुरया ।
निगमारण्यविहारः श्रान्तः शेते स्वधाम्नि कोऽप्येकः ॥ २३ ॥
दारुणचित्तव्याघ्रं धीरमनःखड्गधारया हत्वा ।
अभयारण्ये कोऽपि स्वैरविहारी जयत्येकः ॥ २४ ॥
सज्जनहृदयसरोजोन्मीलनकरधीकरप्रसरः ।
कोऽयं यमिवरपूषा निर्दोषश्चरति चिद्गगने ॥ २५ ॥
कुवलयविकासकारणमज्ञानध्वान्तकौमुदीप्रज्ञः ।
शुद्धो मुनीन्द्रचन्द्रः सुरसेव्यो[3] लसति विष्णुपदे ॥ २६ ॥
स्वानन्दामृतसेकैरान्तरसंतापसंततिं शमयन् ।
चित्रमचञ्चलवृत्तिश्चिद्व्योमनि भाति योगिवर्यघनः ॥ २७ ॥
सुमनःसौरभमञ्जुलसंचारनिवारिताखिलश्रान्तिः ।
संयमिचारुसमीरो विहरत्यानन्दसंपदारामे[4] ॥ २८ ॥
निःश्रेयससरसफले निर्मलविज्ञानपल्लवमनोज्ञे ।
विततेऽभय विपिनतले यतिशितिकण्ठो विभाति कोऽप्येकः
निःसारभुवन[6]मरुतलमुत्सार्यानन्दसारसंपूर्णे ।
वरसरसि चिन्मयेऽस्मिन्परहंसः कोऽपि दीव्यति स्वैरम् ३०
निखिलागमपल्लविते निगमशिरस्तन्त्रशीतलोद्याने ।
मधुतरमञ्जुलवाचः कूजन्नास्ते यतीन्द्रकलकण्ठः ॥ ३१ ॥
दारितमोहमदेभो दूरीकृतसकलदुरितशार्दूलः ।
विबुधोत्तमसिंहवरो विहरत्यानन्दविततकान्तारे ॥ ३२ ॥
अज्ञानमृगवरोज्झितविज्ञानोत्तुङ्गशृङ्गशिखरितले ।
मतिसलिलशीतलाङ्गो यतिमदकलभो विराजते विहरन् ॥
नासाञ्चलनिहिताक्षो नामादिभ्यो निवर्तितस्वान्तः ।
तटिनीतटेषु तत्त्वं ध्यायन्नास्ते यतिः कोऽपि ॥ ३४ ॥
आशावसनो मौनी नैराश्यालंकृतः शान्तः ।
करतलभिक्षापात्रस्तरुतलनिलयो मुनिर्जयति ॥ ३५ ॥

---

१ कश्चित् । २ एको यती । ३ सुरसव्ये । ४ संविदारामे । ५ वीतभये । ६ भवन

विजनावनिकुञ्जगृहे[1] मञ्जुलपुलिनैकमञ्जुतरतल्पे ।
शेते कोऽपि यतीन्द्रः शमसमसुखबोधवस्तुनिस्तन्द्रः ॥३६॥
भूतलमृदुतरशय्यः शीतलवातैकचामरः शान्तः ।
राकाहिमकरदीपो राजति यतिराजशेखरः कोऽपि ॥ ३७ ॥
विपुलशिलातलफलके विमलसरिद्वारिपरिवृतोदारे ।
मन्दं मलयजपवने वाति प्रस्वपिति कोऽपि यतिराजः ॥३८॥
आन्तरमेकं किंचित्संततमनुसंदधन्महामौनी ।
करपुटभिक्षामश्नन्नटति हि वीथ्यां जडाकृतिः कोऽपि ॥३९
प्रविलाप्य जगदशेषं परिशिष्टाखण्डवस्तुपरतन्त्रः ।
प्राश्नाति कवलमास्ये प्राप्तं[2] प्रारब्धकर्मणा कोऽपि ॥ ४० ॥
निन्दति किमपि न योगी नन्दति नैवापरं किमप्यन्तः ।
चन्दनशीतलहृदयः कन्दलितानन्दमन्थरः स्वान्ते[3] ॥ ४१ ॥
संत्यज्य शास्त्रजालं सद्व्यवहारं[4] च सर्वतस्त्यक्त्वा ।
आश्रित्य पूर्णपदवीमास्ते निष्कम्पदीपवद्योगी ॥ ४२ ॥
तृणपङ्कचर्चिताङ्गस्तृणमिव विश्वं विलोकयन्योगी ।
विहरति रहसि वनान्ते विजरामरभूम्नि विश्रान्तः ॥ ४३ ॥
पश्यति किमपि न रूपं न वदति न शृणोति किंचिदपि वचनम्
तिष्ठति निरुपमभूमनि निष्ठामवलम्ब्य काष्ठवद्योगी ॥४४ ॥
जात्यभिमानविहीनो जन्तुषु सर्वत्र पूर्णतां पश्यन् ।
गूढश्चरति[5] यतीन्द्रो मूढवदखिलार्थतत्त्वज्ञः ॥ ४५ ॥
उपधाय बाहुमूलं परिधायाऽऽकाशमवनिमास्तीर्य ।
प्रस्वपिति विरतिवनितां परिरभ्याऽऽनन्दपरवशः कोऽपि४६॥
गतभेदवासनाभिः सप्रज्ञोदारवारनारीभिः ।
रमते सह यतिराजस्त्वप्यन्तान्तःपुरे कोऽपि ॥ ४७ ॥
वैराग्यविपुलमार्गं विज्ञानोद्दामदीपिकोद्दीप्तम् ।
आरुह्य तत्त्वहर्म्यं मुक्त्या सह मोदते यतिराट् ॥ ४८ ॥
विजनतलोत्पलमालां वनितावैतृष्ण्यकल्पवल्लीं च ।
अपमानामृतघुटिकामात्मज्ञः कोऽपि गृह्णाति ॥ ४९ ॥
न निषेधति दोषधिया गुणबुद्ध्या वा न किंचिदादत्ते ।
आविद्यकमखिलमिति ज्ञात्वोदास्ते मुनिः कोऽपि ॥ ५० ॥

---

१ विजननदी । २ प्राप्यं । ३ स्वान्तः । ४ सद्व्यवहारं । ५ गूढं ।

भूतं किमपि न मनुते भावि च किंचिन्न चिन्तयत्यन्तः।
पश्यति न पुरोवर्त्यपि वस्तु समस्तार्थसमरसः कोऽपि॥५१॥
निगृहीताखिलकरणो निर्मृष्टाशेषविषयेहः।
तृप्तिमनुत्तमसीमां प्राप्तः पर्यटति कोऽपि यतिवर्यः॥ ५२ ॥
संत्यजति नोपपन्नं नासंपन्नं च वाञ्छति क्वापि।
स्वस्थः शेते यतिराडान्तरमानन्दमनुभवन्नेकः॥ ५३ ॥
कामपि विमलां पदवीमासाद्याऽऽनन्दसंविदुन्निद्राम्।
आस्ते भिक्षुक एको विहरन्निर्मुक्तबन्धनः स्वैरम्॥ ५४ ॥
वस्तुन्यस्तमिताखिलविश्वविहारे विलीनमनाः।
राजति परानपेक्षो राजाऽखिलवीतरागाणाम्॥ ५५ ॥
आचार्यापाङ्गदृशा समवाप्तापारसंविदाकारः।
प्रशमितसकलविभेदः परहंसः कश्चिदाभाति॥ ५६ ॥
वर्णाश्रमव्यवस्थामुत्तीर्य विधूय विद्यादीन्।
परिशिष्यते यतीन्द्रः परिपूर्णानन्दबोधमात्रेण॥ ५७ ॥
क्षयमुपनीय समस्तं कर्म प्रारब्धमुपभुज्य।
प्रविगलितदेहबन्धः प्राज्ञो ब्रह्मैव केवलं भवति॥ ५८ ॥
स्तिमितमनन्तमनाख्यं संततमानन्दबोधघनम्।
अविकल्पमाद्यमेकं परतत्त्वं वस्तु वर्तते किमपि॥ ५९ ॥
अक्षरमजरमजातं सूक्ष्मतरापूर्वशुद्धविज्ञानम्।
प्रगलितसर्वक्लेशं परतत्त्वं वस्तु वर्तते किमपि॥ ६० ॥
सुखतरममरमक्रूरं सारं संसारवारिधेस्तरणे।
समरसमभयमपारं तत्किंचन विद्यते तत्त्वम्॥ ६१ ॥
अरसमगन्धमरूपं विरजस्कमसत्त्वमतमस्कम्।
निरुपमनिर्भयतत्त्वं तत्किमपि द्योतते नित्यम्॥ ६२ ॥

---

गुरुवरकरुणापाङ्गादार्याभिर्द्व्यधिकषष्टिसंख्याभिः।
निरवद्याभिरवोचं निगमशिरस्तन्त्रसारभूतार्थम्॥
गदितमिदमात्मविद्याविलासमनुवासरं स्मरन्विबुधः।
परिणतपरात्मविद्यः प्रपद्यते सपदि परमार्थम्॥

---

१ वर्तमानं। २ प्रारम्भकं भुक्त्या। ३ अनाद्यं। ४ सन्मात्रं विद्यते किमपि। ५ स्तीरं।

परमशिवेन्द्रश्रीगुरुशिष्येणेत्थं सदाशिवेन्द्रेण ।
रचितेयमात्मविद्याविलासनाम्नी कृतिः पूर्णा ॥

---

ध्यानम् ॥

सोऽहं चिन्मात्रमेवेति चिन्तनं ध्यानमुच्यते ।

पत्रं—४३३ । त्रिशिखि-

सोऽहमित्यादरेणैव ध्यायेद्योगीश्वरेश्वरम् ।

पत्रं—७८० । दर्शनं

ब्रह्मैवास्मीति सद्वृत्त्या निरालम्बनया स्थितिः ।
ध्यानशब्देन विख्यातः परमानन्ददायकः ॥

पत्रं—३३९ । तेजोबिन्दु-

सर्वशरीरेषु चैतन्यैकतानता ध्यानम् ।

पत्रं—४९६ । मण्डलं

तद्द्विविधम्—सगुणं निर्गुणं चेति । सगुणं मूर्तिध्यानम् । निर्गुणमात्मयाथात्म्यम् ।

पत्रं—९९९ । शाण्डिल्यं

सगुणं ध्यानमेतत्स्यादणिमादिगुणप्रदम् ।
निर्गुणध्यानयुक्तस्य समाधिश्च ततो भवेत् ॥
दिनद्वादशकेनैव समाधिं समवाप्नुयात् ।
वायुं निरुध्य मेधावी जीवन्मुक्तो भवत्ययम् ॥

योगतत्त्वोपनिषत् ।

मन्दाधिकारिणो दृष्ट्वा स्वबोध्यान्बुद्धिमाश्रिताः ।
नानोपायैरिदं ब्रह्म नृणामावेदयन्ति ताः ॥

आत्मपुराणे अ० ११ शंकरानन्दः ।

---

मानसपूजा ।

देहो देवालयः प्रोक्तः स जीवः केवलः शिवः ।
त्यजेदज्ञाननिर्माल्यं सोऽहंभावेन पूजयेत् ॥
अभेददर्शनं ज्ञानं ध्यानं निर्विषयं मनः ।
स्नानं मनोमलत्यागः शौचमिन्द्रियनिग्रहः ॥
ब्रह्मामृतं पिबेद्भैक्ष्यमाचरेद्देहरक्षणे ।
वसेदैकान्तिको भूत्वा चैकान्ते द्वैतवर्जिते ॥

इत्येवमाचरेद्धीमान्स एवं मुक्तिमाप्नुयात् ॥

पत्रं—३०६ । मैत्रेयोपनिषद्द्वितीयोऽध्यायः ।

देहो देवालयः प्रोक्तो जीवो देवः सदाशिवः ।

तथैव ।

पत्रं—४६९ । स्कन्दोपनिषत् ।

उन्मन्या अमनस्कं भवति । तस्य निश्चिन्तता ध्यानम् ।

पत्र—४९९ । मण्डलब्राह्मणोपनिषत् ।

सर्वकर्मनिराकरणमावाहनम् । निश्चयज्ञानमासनम् । उन्मनीभावः पाद्यम् । सदाऽमनस्कमर्घ्यम् । सदा दीप्तिरपारामृतवृत्तिः स्नानम् । सर्वात्मभावना गन्धः । दृक्स्वरूपावस्थानमक्षताः । चिदाप्तिः पुष्पम् । चिदग्निस्वरूपं धूपः । चिदादित्यस्वरूपं दीपः । परिपूर्णचन्द्रामृतरसैकीकरणं नैवेद्यम् । निश्चलत्वं प्रदक्षिणम् । सोऽहंभावो नमस्कारः । मौनं स्तुतिः । सर्वसंतोषो विसर्जनमिति ।

पत्रं—४९९—४६९ । मण्डलब्राह्मणोपनिषत् ।

---

अजपा ।

हकारेण बहिर्याति सकारेण विशेत्पुनः ।
हंसहंसेत्यमुं मन्त्रं जिवो जपति सर्वदा ॥
शतानि षड्दिवारात्रसहस्राण्येकविंशतिः ।
एतत्संख्यान्वितं मन्त्रं जीवो जपति सर्वदा ॥
अजपा नाम गायत्री योगिनां मोक्षदा सदा ।
अस्याः संकल्पमात्रेण नरः पापैः प्रमुच्यते ॥
अनया सदृशी विद्या अनया सदृशो जपः ।
अनया सदृशं पुण्यं न भूतं न भविष्यति ॥
येन मार्गेण गन्तव्यं ब्रह्मद्वारं निरामयम् ।

पत्रं—३७१ ध्यानबिन्दु

तथैव ।

योगचूडामण्युपनिषत् ।

हंसहंस वदेद्वाक्यं प्राणिनां देहमाश्रितः ।
स प्राणापानयोर्ग्रन्थिरजपेत्यभिधीयते ॥
सहस्रमेकं द्व्ययुतं षट्शतं चैव सर्वदा ।

पत्रं—३८४ ब्रह्मविद्योपनिषत् ।

षट्शतान्यधिकान्यत्र सहस्राण्येकविंशतिः ।
अहोरात्रवहैः श्वासैर्वायुमण्डलघाततः ॥

पत्रं ८२२ ।

---

वराह ।

हकारेण बहिर्याति सकारेण विशेत्पुनः ।
हंसहंसेत्ययं मन्त्रः सर्वजीवैश्च जप्यते ॥
गुरुवाक्यात्सुषुम्नायां विपरीतो भवेज्जपः ।
सोऽहं सोहमिति प्रोक्तो मन्त्रयोग उदाहृतः ॥
प्रतीतिर्मन्त्रयोगाच्च जायते पश्चिमे पथि ।
हकारेण तु सूर्यः स्यात्सकारेणेन्दुरुच्यते ॥
सूर्याचन्द्रमसोरैक्यं हठ इत्यभिधीयते ॥

पत्रं–६१४ । योगशिखोपनिषत् ।

सोऽहं चिन्मात्रमेवेति चिन्तनं ध्यानमुच्यते ।

पत्रं–४३३ । त्रिशिखिब्राह्मणोपनिषत् ।

सोऽहं भावो नमस्कारः ।

पत्रं–४६० । मण्डलब्राह्मणोपनिषत् ।

सोऽहमिति यावदास्थितिः सा निष्ठा भवति ।

पत्रं–४६४ दक्षिणामूर्त्युपनिषत् ।

देहो देवालयः प्रोक्तः स जीवः केवलः शिवः ।
त्यजेदज्ञाननिर्माल्यं सोऽहंभावेन पूजयेत् ॥

पत्रं–३०६ । मैत्रेयोपनिषत् ।

तथैव ।

पत्रं–४६९ । स्कन्दोपनिषत् ।

सोहमिति स ब्रह्मविद्भवति ।

पत्रं–११७ । शाण्डिल्य ।

सोहमस्मीति निश्चित्य यः सदा वर्तते पुमान् ।
शब्दैरुच्चावचैर्नीचैर्भाषितोऽपि न लिप्यते ॥

पत्रं–७१० । योगकुण्डल्युपनिषत् ।

सोऽहमित्यादरेणैव ध्यायेद्योगीश्वरेश्वरम् ।

पत्रं–७८० ।

सोऽहं ब्रह्म न संसारी न मत्तोऽन्यः कदाचन ।

पत्रं–७८१ । दर्शनोपनिषत् ।

---

प्रणवः ।

प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥

पत्रं—२३ द्वितीयमुण्डके द्वितीयः खण्डः ४

तथैव ध्यानबिन्दौ पत्रं–३७२ ।

धनुस्तारं शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥

पत्रं—७३९ रुद्रहृदयोपनिषत्

आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढवत् ॥

पत्रं–२२१ । ब्रह्मोपनिषत् ।

आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
ज्ञाननिर्मथनाभ्यासात्पाशं दहति पण्डितः ॥

पत्रं–१९० । कैवल्योपनिषत् ।

स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढवत् ॥

पत्रं–१८० । श्वेताश्वतरोपनिषत् ।

आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढवत् ॥

पत्रं–३७२ । ध्यानबिन्दूपनिषत् ।

वैराग्यमरणिं कृत्वा ज्ञानं कृत्वोत्तरारणिम् ।
गाढतामिस्रसंशान्त्यै गूढमर्थं निवेदयेत् ॥

पत्रं–४६१ । दक्षिणामूर्त्युपनिषत् ।

अकारः प्रथमः । उकारो द्वितीयः । मकारस्तृतीयः । अर्धमात्रश्चतुर्थो नादः पञ्चमी बिन्दुः षष्ठी कला । सप्तमी कलातीताऽष्टमी शान्तिः । नवमी शान्त्यतीता दशम्युन्मन्येकादशी मनोन्मनी । द्वादशी पुरीतती ।

त्रयोदशी तनुमध्यमा चतुर्दशी पश्यन्ती । पञ्चदशी परा । षोडशी पुनश्चतुष्षष्टिमात्रा । प्रकृतिपुरुषद्वैविध्यमासाद्याष्टाविंशत्युत्तरशतभेदमात्रा । स्वरूपमासाद्य सगुणनिर्गुणत्वमुपैति । एकोऽपि ब्रह्म प्रणवः ।

पत्रं—४२६ । नारदपरिव्राजकम् ।

तथैव

तुरीयमात्राचतुष्टयमर्धमात्रांशम् । अयमेव ब्रह्म प्रणवः । स परमहंसतुरीयातीतावधूतैरुपास्यः । तेनैव ब्रह्म प्रकाशते । तेन विदेहमुक्तिः ।

पत्रं—६४७ । परमहंसपरिव्राजकं ।

चैतन्यमात्रमोंकारं ब्रह्मैव सकलं स्वयम् ।

पत्रं—३६३ । तेजोबिन्दु ।

ब्रह्मप्रणवसंलग्ननादो ज्योतिर्मयात्मकः ।
मनस्तत्र लयं याति तद्विष्णोः परमं पदम् ॥
तावदाकाशसंकल्पो यावच्छब्दः प्रवर्तते ।
निःशब्दं तत्परं ब्रह्म परमात्मा समीयते ॥
नादो यावन्मनस्तावन्नादान्तेऽनुमनोन्मनी ।
स शब्दश्चाक्षरे लीनो निःशब्दं परमं पदम् ॥
सदा नादानुसंधानात्संक्षीणा वासना तु या ।
निरञ्जने विलीयते मनोवायू न संशयः ॥
नादकोटिसहस्राणि बिन्दुकोटिशतानि च ।
सर्वे तत्र लयं यान्ति ब्रह्मप्रणवनादके ॥
सर्वावस्थाविनिर्मुक्तः सर्वचिन्ताविवर्जितः ।
मृतवत्तिष्ठते योगी स मुक्तो नात्र संशयः ॥
शङ्खदुंदुभिनादं तु न शृणोति कदाचन ।
काष्ठवज्जायते देह उन्मन्याऽवस्थया ध्रुवम् ॥
न जानाति स शीतोष्णं न दुःखं न सुखं तथा ।
न मानं नावमानं तु संत्यक्त्वाऽथ समाधिना ॥

पत्रं—३७० । नादबिन्दु ।

अष्टाङ्गं च चतुष्पादं त्रिस्थानं पञ्चदैवतम् ।
ओंकारं यो न जानाति ब्राह्मणो न भवेत्तु सः ॥

पत्रं—३७२ ।

ओंकारध्वनिनादेन वायोः संहरणादिकम् ।
यावद्बलं समादध्यात्सम्यग्नादलयावधि ॥

गमागमस्थं गमनादिशून्यमोंकारमेकं रविकोटिदीप्तम् ।
पश्यन्ति ये सर्वजनान्तरस्थं हंसात्मकं ते विरजा भवन्ति ॥

यन्मनस्त्रिजगत्सृष्टिस्थितिव्यसनकर्मकृत् ।
तन्मनो विलयं याति तद्विष्णोः परमं पदम् ॥

पत्रं–३७२। ध्यानबिन्दु।

त्रिशङ्कुं वज्रमोंकारमूर्ध्वनालं भ्रुवोर्मुखम् ।
कुण्डलिं चालयन्प्राणान्भेदयञ्शशिमण्डलम् ॥

पत्रं ३८४ ब्रह्मविद्योपनिषत्।

सर्वविघ्नहरो मन्त्रः प्रणवः सर्वदोषहा ।
एवमभ्यासयोगेन सिद्धिरारम्भसंभवा ॥

पत्रं ३९०

हृदि स्थाने स्थितं पद्मं तस्य वक्त्रमधोमुखम् ।
ऊर्ध्वनालमधोबिन्दु तस्य मध्ये स्थितं मनः ॥

अकारे रेचितं पद्ममुकारेणैव भिद्यते ।
मकारे लभते नादमर्धमात्रा तु निश्चला ॥

पत्रं–३९९। योगतत्त्वम्।

शुचिर्वाऽप्यशुचिर्वाऽपि यो जपेत्प्रणवं सदा ।
न स लिप्यति पापेन पद्मपत्रमिवाम्भसा ॥

पत्रं–४६३। योगचूडामण्युपनिषत्।

परस्वरूपध्यानेन निरालम्बमवलम्ब्य स्वात्मनिष्ठानुकूलेन सर्वं विस्मृत्य तुरीयातीताऽवधूतवेषेणाद्वैतनिष्ठापरः प्रणवात्मकत्वेन देहत्यागं करोति यः सोऽवधूतः स कृतकृत्यो भवतीत्युपनिषत् ।

पत्रं–६३३। तुरीयातीतावधूतोपनिषत्।

तारं द्वादशसाहस्रमभ्यसेच्छेदनं हि तत् ।
यस्तु द्वादशसाहस्रं प्रणवं जपतेऽन्वहम् ॥
तस्य द्वादशभिर्मासैः परं ब्रह्म प्रकाशते ॥

पत्रं–६४३। संन्यासोपनिषत्।

तारं जपतु वाक्तद्वत्पठत्वाम्नायमस्तकम् ।

पत्रं–७१०। अवधूतोपनिषत्।

हकारेण बहिर्याति सकारेण विशेत्पुनः ।
हंसहंसेत्यमुं मन्त्रं जीवो जपति सर्वदा ॥
पत्रं—३७९ । ध्यानबिन्दु ।

शतानि षड्दिवारात्रं सहस्राण्येकविंशतिः ।
एतत्संख्यान्वितं मन्त्रं जीवो जपति सर्वदा ॥
अजपानाम गायत्री योगिनां मोक्षदा सदा ।
अस्याः संकल्पमात्रेण नरः पापैः प्रमुच्यते ॥
अनया सदृशी विद्या अनया सदृशो जपः ।
अनया सदृशं पुण्यं न भूतं न भविष्यति ॥
येन मार्गेण गन्तव्यं ब्रह्मद्वारं निरामयम् ।
पत्रं—३७९ । ध्यानबिन्दु ।

---

## समाधिः ।

समाधिलक्षणम्—ध्यानविस्मृतिः समाधिः ।
पत्रं—४१७ । मण्डलोपनिषत् ।

ध्यानस्य विस्मृतिः सम्यक्समाधिरभिधीयते ।
त्रिशिखिब्राह्मणोपनिषत्—४१२

निर्विकारतया वृत्त्या ब्रह्माकारतया पुनः ।
वृत्तिविस्मरणं सम्यक्समाधिरभिधीयते ।
पत्रं—३३९ । तेजोबिन्दूपनिषत् ।

प्राणायामद्विषट्केन प्रत्याहारः प्रकीर्तितः ।
प्रत्याहारद्विषट्केन जायते धारणा शुभा ॥
धारणाद्वादशं प्रोक्तं ध्यानं योगविशारदैः ।
ध्यानद्वादशकेनैव समाधिरभिधीयते ॥
यत्समाधौ परं जोतिरनन्तं विश्वतोमुखम् ।
तस्मिन्दृष्टे क्रिया कर्म यातायातो न विद्यते ॥
पत्रं—४९३ । योगचूडामण्युपनिषत् ।

सगुणध्यानमेतत्स्यादणिमादिगुणप्रदम् ।
निर्गुणध्यानयुक्तस्य समाधिश्च ततो भवेत् ॥
दिनद्वादशकेनैव समाधिं समवाप्नुयात् ।
समाधिः समतावस्था जीवात्मपरमात्मनोः ॥
योगतत्त्वं ३९३

जीवात्मपरमात्मैक्यावस्था त्रिपुटीरहिता परमानन्दस्वरूपा।
शुद्धचैतन्यात्मिका भवति ॥

शाण्डिल्यं १९९

समाधिः संविदुत्पत्तिः परजीवैकतां प्रति ।

दर्शनं ७८०

ध्यातृध्याने विहाय निवातस्थितदीपवद्ध्येयैकगोचरं चित्तं समाधिर्भवति ॥

पैङ्गल ११२ पत्रं १८९ । तथैव । अध्यात्मं

मनःप्रचारशून्यं परमात्मनि लीनं भवति । पयःस्रावानन्तरं धेनुस्तनक्षीरमिव सर्वेन्द्रियवर्गे परिनष्टे मनोनाशं भवति ॥

मण्डलं–द्वि०ब्राह्मणं ४६१—२

प्राणापानयोरैक्यं कृत्वा धृतकुम्भको नासाग्रदर्शनधृढभावनया द्विकराङ्गुलिभिः षण्मुखीकरणेन (प्रणव)ध्वनिं निशम्य मनस्तत्र लीनं भवति ।

मण्डलं—द्वि०ब्राह्मणं ४९९

सलिले सैन्धवं यद्वत्साम्यं भवति योगतः ।
तथाऽऽत्ममनसोरैक्यं समाधिरभिधीयते ॥

वराह–८१९ सौभाग्य–८४७

यत्समत्वं तयोरत्र जीवात्मपरमात्मनोः ।
समस्तनष्टसंकल्पः समाधिरभिधीयते ॥
प्रथाशून्यं मनःशून्यं बुद्धिशून्यं निरामयम् ।
सर्वशून्यं निराभासं समाधिरभिधीयते ॥

सौभाग्यलक्ष्मी–४८७

वराह—सौभाग्यलक्ष्मी—महावाक्यरत्नावलिः

ब्रह्माकारमनोवृत्तिप्रभावोऽहंकृतिं विना ।
संप्रज्ञातसमाधिः स्याद्ध्यानाभ्यासप्रकर्षतः ॥
प्रशान्तवृत्तिकं चित्तं परमानन्ददीपकम् ।
असंप्रज्ञातनामाऽयं समाधिर्योगिनां प्रियः ॥

पत्रं–८६३ । मुक्तिकोपनिषत् ।

ब्रह्मोपनिषदि नारदपरिव्राजकोपनिषदि च ।

नेत्रस्थं जागरितं विद्यात्कण्ठे स्वप्नं समादिशेत् ।
सुषुप्तं हृदयस्थं तु तुरीयं मूर्ध्नि संस्थितम् ॥

त्रिशिखि ब्राह्मणोपनिषदि

जाग्रद्वृत्तिं विजानीयात्कण्ठस्थं स्वप्नवर्तनम् ।
सुषुप्तं तालुमध्यस्थं तुर्यं भ्रूमध्यसंस्थितम् ॥

दर्शनोपनिषदि

पर्वताग्रे नदीतीरे बिल्वमूले वनेऽथवा ।
मनोरमे शुचौ देशे मठं कृत्वा समाहितः ॥

नारदपरिव्राजकोपनिषदि

शून्यागारवृक्षमूलदेवगृहतृणकूटकुलालशालाग्निहोत्रशालाग्निदिगन्तरनदीतटपुलिनभूगृहकंदरानिर्झरस्थण्डिलेषु वने वा ।

श्वेताश्वतरोपनिषदि

समे शुचौ शर्करवह्निवालुका-
विवर्जिते शब्दजलाशयादिभिः ।
मनोनुकूले न तु चक्षुपीडने
गुहानिवाताश्रयणे प्रयोजयेत् ॥

अद्वयतारकोपनिषदि

गुशब्दस्त्वन्धकारः स्याद्रुशब्दस्तन्निरोधकः ।
अंधकारनिरोधित्वाद्गुरुरित्यभिधीयते ॥

योगतत्त्वोपनिषदि

गोधूममुद्गशाल्यन्नं योगवृद्धिकरं विदुः ।
ततः परं यथेष्टं तु शक्तः स्याद्वायुधारणे ॥

योगचूडामण्युपनिषदि

अङ्गानां मर्दनं कृत्वा श्रमसंजातवारिणा ।
कट्वम्ललवणत्यागी क्षीरभोजनमाचरेत् ॥
ब्रह्मचारी मिताहारी योगी योगपरायणः ।
अब्दादूर्ध्वं भवेत्सिद्धो नात्र कार्या विचारणा ॥
सुस्निग्धमधुराहारश्चतुर्थांशविवर्जितः ।
भुञ्जते शिवसंप्रीत्या मिताहारी स उच्यते ॥

संन्यासोपनिषदि

आत्मसंमितमाहारमाहरेदात्मवान्यतिः ।
आहारस्य च भागौ द्वौ तृतीयमुदकस्य च ॥
वायोः संचरणार्थाय चतुर्थमवशेषयेत् ॥ १ ॥

हठयोगप्रदीपिकायाम्

गोधूमशालियवषष्टिकशोभनान्न-
क्षीराज्यखण्डनवनीतसितामधूनि ।
शुण्ठीपटोलकफलादिकपञ्चशाखा
मुद्गादिदिव्यमुदकं च यमीन्द्रपथ्यम् ॥

पैङ्गलोपनिषदि

अमृतेन तृप्तस्य पयसा किं प्रयोजनमेवं स्वात्मानं ज्ञात्वा वेदैः प्रयोजनं किं भवति । ज्ञानामृततृप्तयोगिनो न किंचित्कर्तव्यमस्ति तदस्तिचेन्न स तत्त्वविद्भवति ॥